॥ काशीजीमेआदिविशेश्वरके
कीगलीशाबूहरखचंदजीके
यंत्रालयमेदशाकर्मपद्धति
छपनेवालापुरविनजिसेलना
केदुकानपरमिलेगा। संवत्



पासमहल्लाधुधुरानास्यामा
वाडेमेराजअग्निहोत्रीकेगणे
शपागयालिखागोविंदलाल
होयउलेहुंछिराजगणेपरदाऊ
१९१८ आश्विनसुदी १

द० क० ॥ॐ श्रीगणेशाय नमः अथ गर्भाधानम् तत्र ऋतुस्नाता चतुर्थदिने वधूः प्रातस्तूष्णीमादित्यमुपतिष्ठेत् ततस्तद्दिने
प० १ मातृपूजाभ्युदयिके कृत्वा षोडशरात्रादर्वाक् शुभरात्रौ दक्षिणकरेण पतिर्वध्वा उपस्थमभिस्पृश्य जपति ॐ पूषा भगꣳ
सविता दधातु रुद्रस्त्वष्टा रूपाणि तेजो वैश्वानरो दधातु इति मंत्रेण अथ प्राङ्मुख उपविष्ट उदङ्मुखीं वा एतामभिमंत्रयेद
नेन ॐ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ इति मंत्रेण ततः ॐ रेतो मूत्रं वि
जहाति योनिं प्रविशदिन्द्रियं गर्भो जरायुणावृत उल्वं जहाति जन्मना इति मंत्रेण रेतः स्रावणं अथ तस्या हृदयमालभेत
ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितं वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः श
तमिति मंत्रेण ततस्तस्यौ हृष्टमनाः हृद्देशे प्रसन्नामनातुरां कामयमानामभग्नशय्यायां प्रदोषादूर्ध्वं स्त्रियमभिगच्छेत् सायं
द्विगर्भं न दधाति तदा पतिः कृतोपवासः पुष्यनक्षत्रे श्वेतकंटकारिकामूलमुत्पाट्योदकेन पिष्ट्वा वधूदक्षिणनासापुटे तद्रसं द एम०
द्यात् अनेनैव मंत्रेण ॐ इयमोषधी त्रायमाणा सहमाना सरस्वती। अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभम् इति इति ग १

र्भाधानम् १ अथपुंसवनम् तत्रगर्भमासापेक्षया द्वितीयतृतीययोरन्यतरस्मिन् करणीयं पुष्यपुनर्वसुमृगशिरोहस्तमूल
श्रवणान्यतमपुंनामनक्षत्रयुतेभयचंद्रताराऽनुकूलदिवसमवगम्य ततः पूर्वदिने वधूमुपवासं कारयित्वा अग्रिमदिने त
स्याः स्नातायाः अहतवासोयुगपरिधानानंतरं शुचिः स्नातः कृताचमनो मातृपूजाभ्युदयिकादि कृत्वा वटप्ररोहं वटशुंगांश्च
आचाराऽत् कुशकंटकमपिशिशिरेण जलेन पिष्ट्वा वधूदक्षिणनासापुटे नतत्रसं दद्यात् ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य
जातः पतिरेक आसीत् सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॐ अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः
समवर्तताग्रे तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे इति मंत्राभ्यां इतिपुंसवनम् २ अथसीमंतोन्नयनम्
तत्र गर्भमासापेक्षया षष्ठेऽष्टमे वा पुंनामनक्षत्रयुतचंद्रताराऽनुकूलविहितदिने मातृपूजाभ्युदयिकादि कृत्वा वहिः शालायां
कुशंडिकां कुर्यात् तत्क्रमः कुशत्रयेण हस्तपरिमितचतुरस्रभूमिं परिसमुह्य कुशानैशान्यां निःक्षिप्य गोमयोदकेनोप
लिप्य श्रुवमूलेन स्फ्येन वोत्तरतस्त्रिरुल्लिखेत् उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य वारिणा तं देशमभिषिंच्य कांस्यपा

ह०क० त्रेणाग्निमादायतत्रपात्रस्त्रुवं निदध्यात् ततो ब्राह्मणवरणं ॐ अद्यकर्त्तव्यसीमंतोन्नयनहोमकर्मणि कृताकृतावे
पू क्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे
२ ॐ वृतोस्मीति प्रतिवचनं ॐ यथाविहितं कर्म्म कुर्विति होत्राभिहिते ॐ करवाणीति प्रतिवचनानंतरं अग्नेर्दक्षिण
तः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्यास्मिन्सीमंतोन्नयनहोमकर्म्मणि त्वम्मे ब्रह्मा भवेत्यभिधाय
ॐ भवानीति तेनोक्ते अग्निप्रदक्षिणं कारयित्वा ब्रह्मासनं तत्रोपवेश्य प्रणीतापात्रं पुरतः कृत्वा जलेनापूर्य कुशै
राच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादी
शानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यांतं अग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुश राम
त्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली चरुस्थाली सम्मार्जनकुशाः उपयम २
नकुशाः प्रादेशमितपालाशसमिधस्त्रयं स्रुवः आज्यं षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नतंडुलपूर्णपा

त्रं तिलमुद्गमिश्रास्तण्डुलाः पूर्णपात्रं एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि तदुत्तरतः वी
णागाधिनौ प्रादेशमात्रसाग्राश्वत्थशंकुः त्रिश्वेतशल्लकीकंटकं पीतसूत्रपूर्णतर्कुः दर्भपिंजुलिकात्रयं उदुंबरपु
ष्पफलसुवर्णघटितदेवकर्कराद्दियुक्तसूत्रडोरकपुष्पबिल्वादिफलयुतवारणहस्तवादि अन्यद्यथाचारपरिप्राप्तद्र
व्यमासादनीयं ततः पवित्रच्छेदनार्थकुशैः प्रादेशमितपवित्रे छित्वा सपवित्रपाणि [illegible] णीतोदकं त्रिः प्रोक्षणीपात्रे कृ
त्वा अनामिकांगुष्ठाभ्यां उत्तराग्रे पवित्रे गृहीत्वा त्रिरुद्दिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणं ततः प्रोक्षणीजलेन यथा
सादितद्रव्यसेचनं ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रनिधानं ततः आज्यस्थाल्यामाज्यनिर्वापः चरौ तु तिलतण्डुलमु
द्गानां प्रणीतोदकेन त्रिः प्रक्षाल्य तत्र किंचिज्जलं दत्वा प्रक्षेपः ततः स्वयं चरुं गृहीत्वा ब्रह्मणा चाज्यं ग्राहयित्वा वह्नेरुत्त
रतश्चरुं दक्षिणतः आज्यं युगपत् निदध्यात् ततः सिद्धे चरौ ज्वलत्तृणं प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षेपः ततः स्रुवप्र
तपनं त्रिः ततः सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निद

ध्यात् ततः आज्यमग्नितश्चरोः पूर्वेणानीपात्रे धृत्वा आज्यपश्चिमेन चरुमानीयाज्यस्योत्तरतो निदध्यात् ततः आ-
ज्यं प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं ततः पूर्ववत्प्रोक्षण्युत्पवनं ततउत्थायोपयमनकुशानादा-
य प्रजापतिं मनसाध्यात्वा तूष्णीमग्नौ क्षिपेत् समिधः घृताक्ताः अथोपविश्य सपवित्रप्रोक्षणीजलेनाग्निं प्रदक्षिण-
क्रमेण पर्युक्ष्य प्रणीतापात्रे पवित्रे धृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहुयात् ततः आहुतिचतुष्टयम-
त्याहुत्यनंतरं हुतशेषस्य घृतस्य प्रोक्षणीपात्रे प्रक्षेपः ततः समिद्धतमेग्नौ ॐ प्रजापतये स्वाहा इदं प्रजापतये इति
मनसा ॐ इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ
ततो ऽन्वारब्धस्थालीपाकेन होमः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ततोनन्वारब्धो जुहुयात् तत्र दाहु-
त्यनंतरं स्रुवावस्थितहुतशेषस्य प्रोक्षण्यां प्रक्षेपः तत्रैवाज्यस्थालीपाकाभ्यां स्विष्टकृद्धोमः ॐ अग्नये स्विष्टकृते स्वाहा इदं-
मग्नये स्विष्टकृते ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नो अग्ने वरुणस्य

विद्वान्देवस्य हेडो अव यासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा इदमग्निवरु-
णाभ्यां ओं स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न ए-
धि स्वाहा इदमग्निवरुणाभ्यां ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमया असि अया नो यज्ञं वहास्यया नो धेहि भेषजं ओं
स्वाहा इदमग्नये ओं ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो अद्य सविता ‍उत विष्णुर्विश्वे मुञ्चन्तु म-
रुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ओं उदुत्तमं वरुण पाशमस्मदवाधमं
विमध्यमं श्रथाय अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा इदं वरुणाय इति सर्वप्रायश्चित्तं ओं प्रजा-
पतये स्वाहा इदं प्रजापतये इति प्राजापत्यं अथ संस्रवप्राशनं ततः आचम्य ओं अद्य सीमन्तोन्नयन होमकर्मणि कृ-
ताकृतावेक्षणरूप ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मन् दक्षि-
णां तुभ्यमहं संप्रददे ओं स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः ततः ओं सुमित्रिया न आप ओषधयः सन्तु इति पवित्रा

दे. क. प. ४

मांमणीताजलेनशिरः संमृज्य ओं दुर्मित्रियास्तस्मैसंतु योस्मान्द्वेष्टि यं चवयं द्विष्मः इत्यैशान्यां मणीतानुब्जीकरणं
ततस्तरणक्रमेणवर्हिरुत्थाप्याज्येनाभिघार्य ओं देवागातुविदोगातुवित्वागातुमित मनसस्पतइमंदेवयज्ञं स्वाहावा
तेधाः स्वाहा इतिमंत्रेणवर्हिर्होमः ततः पश्चाद्गेवधूमहतवाससीपरिधायमृद्वासनेउपवेशयेत् ततस्त्रिश्वेतशल्ल
कीकंटकाश्वत्थशंकुपीततंतुनद्धदर्भपिंजुलीत्रितयउदुंबरफलयुग्मान्वितप्रादेशमिताशाखाभिर्वर्तुलीकृत्यसी
मंतमूर्ध्वंनिविनयति ओंभूर्भुवः स्वः विनयामीति इतिमंत्रेणसकृत् ओंभूर्विनयामि ओंभुवःविनयामि ओंस्वर्विनया
मि इतिमंत्रेणवारत्रयं ततः उदुंबरफलयुग्मान्वितशल्लकीकंटकादिपंचकं वधूसीमंतदक्षिणतोवेणीकृत्वापतिर्ब
ध्नाति ओं अयमूर्जावतोवृक्षऊर्जीवफलिनीभव इतिमंत्रेण ततउदुंबरफलादिसमन्वितसूत्रडोरकंवधूग्रीवायांत्र्यनेनै
वक्रमेणवाश्वावाराद्बध्नीयात् ततोबिल्वादिसमन्वितवाराष्टतयेनस्नपनं ततः फलपुष्पादिकंनूतनवस्त्रेणवध्वामतीक्ष्ण
धर्तव्यं मतिस्नपनेस्वामीपठनीयोमंत्रः ओं अयमूर्जेतिरःजानं संगायेतामितिप्रैषानंतरं सोमएवनोराजेमामानुषीःप्रजाः

अविमुक्तचक्र आसीरंत्तीरेतुभ्यमसौश्री अमुकदेवी  इतिगाथांवीणागायिनौगायतः अन्योवावीरतरः ततो याया
मसन्निहितनदीतस्यानामगृन्हीयात् ततउत्थाप वधूदक्षिणकरेणस्रुवस्पृष्टेन फलपुष्पसमन्वितघृतेन ॐमूर्द्धानंदि
वोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निंकविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः स्वाहाइतिमंत्रेण
पूर्णादर्विपरापतसुपूर्णापुनरापत  वस्नेवविक्रीणावहाइषमूर्ज्जं शतक्रतो स्वाहेत्यनेनपूर्णाहुतिंदत्त्वोपविश्यस्रु
वेणभस्मानीयदक्षिणाकरानामिकाग्रगृहीतभस्मना ॐत्र्यायुषंजमदग्नेरितिललाटे ॐकश्यपस्यत्र्यायुषमितिग्रीवायां
ॐयद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले ॐतन्नोअस्तुत्र्यायुषमितिहृदि  इतित्र्यायुषंकुर्यात् अनेनैवक्रमेणवध्वा
अपित्र्यायुषंकुर्यात् तत्रतन्नेअस्तुत्र्यायुषंइतिविशेषः ततोब्राह्मणभोजनं  इतिसीमंतकर्म ३. अथजातकर्म तत्रप्र
थमंसूष्यन्तीमद्भिःपरिषिंचति ॐएजतुदशमास्योगर्भोजरायुणासह यथायंवायुरेजतियथासमुद्रएजति एवायंदश
मास्योअस्रज्जरायुणासह  इतिमंत्रेण ततोवधूसमीपेपत्निर्जपति ॐअवैतुपृश्निःशेवलंशुनेजरायत्तवेनैवमांसेन

शिवर्णीनकस्मिंश्चनापतमवजरयुपघतामिति ततः पुत्रेजातेनाभिवर्द्धनीयात्माकृतताभ्युदयिकः कुमारं दक्षिणकर
स्यानामिकया स्वर्णान्तर्हितया मधुघृते एकीकृत्य घृतमेव वा प्राशयति ॐ भूस्त्वयि दधामि ॐ भुवस्त्वयि दधामि ॐ स्वस्त्वयि
दधामि ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि इति मंत्रेण एतन्मेधाजननं ततः कुमारस्य दक्षिणकर्णे नाभ्यां वा मुखं दत्वा ॐ अ
ग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि १ ॐ सोम आयुष्मान्स ओषधीभिरायुष्मांस्तेन त्वायुषायुष्मंतं
करोमि २ ॐ ब्रह्मायुष्मान्ब्राह्मणैरायुष्मं तेन त्वायुषायुष्मंतं करोमि ३ ॐ देवा आयुष्मंतस्तेऽमृतेनायुष्मंतस्तेन त्वायुषायु
ष्मंतं करोमि ४ ॐ ऋषय आयुष्मंतस्ते व्रतैरायुष्मंतस्तेन त्वायुषायुष्मंतं करोमि ५ ॐ पितर आयुष्मंतस्ते स्वधाभिरायुष्मंतस्तेन
त्वायुषायुष्मंतं करोमि ६ ॐ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तेन त्वायुषायुष्मंतं करोमि ७ ॐ समुद्र आयुष्मान्स स्रवन्तीभि
रायुष्मांस्तेन त्वायुषायुष्मंतं करोमि ८ इति त्रिर्जपित्वा ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नोऽस्तु
त्र्यायुषम् इति त्रिर्जपित्वा अथ तस्य दीर्घमायुः कामयमानः पुत्रमभिमृशन्वाकुञ्जपति सचायं ॐ दिवस्परि प्रथमं जज्ञे

अग्निरस्मद्द्वितीयंपरिजातवेदाः तृतीयमप्सुनृमणाअजस्त्रमिंधानएनंजरतेस्वाधीः १ विद्मातेअग्नेत्रेधात्रयाणि
विद्मातेधामविभृतापुरुत्रा विद्मातेनामपरमंगुहायद्विद्मातमुत्संयतआजगंथ २ समुद्रेत्वानृमणाअप्स्वंतर्नृचक्षाईं
धेदिवोअग्नऊधन् तृतीयेत्वारजसितस्थिवांसमपामुपस्थेमहिषाअवर्धन् ३ अक्रंददग्निःस्तनयन्निवद्यौःक्षामा
रेरिहद्वीरुधःसमंजन् सद्योजज्ञानोविहीमिद्धोअख्यदारोदसीभानुनाभात्यन्तः ४ श्रीणामुदारोधरुणोरयीणांमनीषा
णांप्रार्पणःसोमगोपाः वसुःसूनुःसहसोअप्सुराजाविभात्यग्रउषसामिधानः ५ ॐ विश्वस्यकेतुर्भुवनस्यगर्भआरोदसी
अपृणाज्जायमानः वीडुंचिदद्रिमभिनत्परायंजनायदग्निमयजंतपंच ६ ॐ उशिक्पावकोअरतिःसुमेधामर्तेष्वग्निरमृतो
निधायि इयर्तिधूममरुषंभरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन् ७ ॐ दृशानोरुक्मउर्व्याव्यद्यौद्दुर्मर्षमायुःश्रियेरुचानः
अग्निरमृतोअभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः ८ ॐ यस्तेअद्यकृणवद्भद्रशोचेऽपूपंदेवघृतवंतमग्ने प्रतंनयप्रतरंव
स्योअच्छाभिसुम्नंदेवभक्तंयविष्ठ ९ ॐ आतंभजसौश्रवसेष्वग्नउक्थउक्थआभजशस्यमाने प्रियःसूर्येप्रियोअग्नाभवा

सुज्ञातेन भिनद्दुज्ञनिल्वैः १० ॐ त्वामग्ने यजमाना अनुद्यून्विश्वावसु दधिरे वार्याणि त्वया सह द्रविणमिच्छमाना व्र
जं गोमन्तमुशिजो विवव्रुः ततः कुमारं प्रति दिशमेकैकं ब्राह्मणं मध्ये पंचमं ऊर्द्ध्वमवेक्ष्यमाणमवस्थाप्य तमुद्दिश्य इममनुप्रा
णितेति पिता ब्रूयात् ततस्तेषु प्राणेति पूर्वो व्यानेति दक्षिणो अपानेति अपर उदानेति उत्तर उपरिष्टादवेक्ष्यमाणः समा
नेति पंचमो ब्रूयात् एषामसंभवे स्वयमेव तत्र तत्रोपविश्य तथैव ब्रूयात् एषामसंभवे स्वयमेव अथ कुमारस्य जन्मभूमिम
भिमंत्रयेत् ॐ वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितं वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम
शरदः शतमित्यनेन अथ कुमारमभिमृशति अश्मा भव परशुर्भव हिरण्यमश्रुतं भव आत्मा वै पुत्रनामासि त्वं जीव शरदः
शतमित्यनेन तत्र कुमारमातरमभिमंत्रयेत् इडासि मैत्रावरुणी वीरे वीरमजीजनथाः सा त्वं वीरवती भव यास्मान्वीरवतोक
रत् इत्यनेन ततः कुमारनाभिवर्द्धनेकृते तस्या दक्षिणस्तनं प्रक्षाल्य कुमारस्य प्रयच्छति ॐ इमꣳ स्तनमूर्ज्जस्वन्तं धयापां प्रपी
नमग्ने सरिरस्य मध्ये उत्सं जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व इति मंत्रेण ततो वामस्तनं प्रक्षाल्य प्रयच्छति ॐ

इम ७७ स्तनमित्यादि यस्ते स्तनः शशयो योमयो भूर्यो रत्नधा वसुविद्यः सुदत्रः येन विश्वा पुष्यसि वार्याणि सरस्वति तं
इह धातवे कः इति मंत्राभ्यां ततः प्रसविनीशयनीयः मस्तकोपरि भूमौ वारिपूर्णभाजनं निदध्यात् आपो देवेषु जाग्रथ यथा
देवेषु जाग्रथ एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथेत्यनेन मंत्रेण तच्च सूतिकोत्थापनपर्यंतं तत्रैव धर्तव्यं ततः सूतिकागृह
द्वारप्रदेशे पञ्चभूसंस्कारान् कृत्वाग्नेरुपसमाधानं स चाग्निः सूत्थानदिनपर्यंतं तत्रैव धर्तव्यः तत्र चाग्नौ संध्ययोः फलीकरणा
स्तंडुलास्तन्मिश्रान् सर्षपान् दशदिनानि पिता अन्यो वा ब्राह्मणो नित्यं हस्तेन जुहोति तत्र प्रथमाहुतौ मंत्रः ॐ शण्डामर्का
उपवीरः शौण्डिकेय उलूखलः मलिम्लुचो द्रोणाश्च्यवनो नश्यतादितः स्वाहा इदं शण्डामर्काभ्यामुपवीराय मलिम्लुचाय द्रोणे
भ्यश्च्यवनाय द्वितीयाहुतौ ॐ आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारु
णश्च्यवनो नश्यतादितः स्वाहा इदमालिखतेऽनिमिषाय किंवदन्तायोपश्रुतये हर्यक्षाय कुंभीशत्रवे पात्रपाणये नृमणये हं
त्रीमुखाय सर्षपायारुणाय अथ यदि दशाहाभ्यंतरे कुमारं ग्रहो बालमाविशेत्तेनाविष्टोऽन्नामयति नरोदिति नह्यष्यति

द॰ क॰ प॰ ७

तुष्यति च तदैतन्नैमित्तिकं कर्त्तव्यं तदा तं बालकं जालेनाच्छाद्य उत्तरीयेण वाससा अंकमादाय तं बालं पिता जपति कू
र्कुरः सुकूर्करः कूर्कुरो बालबंधनः चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यं यत्ते देवा वरमददुः स त्वं कुमार
मेव वृणीथाः चेच्चेच्छुनक नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यं यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ
चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यमिति जपः न नामयति न रोदिति न हृष्यति न ग्लायति यत्र वयं व
दामो यत्र चाभिमृशामसि इत्यभिमृशति इति जातकर्म ४ अथ नामकर्म अथ दशमे हनि सूतिकां चोत्थाप्यैकादशे
हनि विहितदिनांतरे वा पिता नाम कुर्यात् तत्र प्रथमं मातृपूजाभ्युदयिकादि कृत्वा ब्राह्मणान्भोजयेत् कुमारं संस्नाप्य अह
तवासः परिधाप्य कृतस्वस्त्ययनं प्राङ्मुखं दक्षिणकर्णे अमुकशर्मासीति त्रिः श्रावयति आयुर्वेदन्मंत्रः ओं अंगादंगादभि
जातोसि हृदयादभिजायते आत्मा वै पुत्रनामासि स त्वं जीव शरदां शतम् नाम द्व्यक्षरं चतुरक्षरं सुखोद्यं शर्मांतं ब्राह्मणस्य वर्मां
तं क्षत्रियस्य गुप्तांतं वैश्यस्य दासांतं शूद्रस्य इति नामकर्म ५ अथ निष्क्रमणं तत्र चतुर्थे मासि चंद्रतारानुकूले दिने स्नातम

क॰

लंकृतं गृहाद्बहिर्णीय पिता स्योवा ब्राह्मणः सूर्य्यमुदीक्षयेत ओं तच्चक्षुरित्यादि मंत्रेण ततः फलपुष्पान्वितपयसा भास्कराय

अर्घोदेयः इति निष्क्रमणम् ६ अथान्नप्राशनम् तत्र षष्ठे मासि चंद्रताराऽनुकूले शुभदिने स्नातः शुचिराचांतः शुक्लद्विवासाः

पिता सूतिकागृहे एव कुशकण्डिकां कुर्यात् तत्र कुशैर्हस्तपरिमितचतुरस्रभूमिपरिसमूह्य तानैशान्यां निःक्षिप्य गोमयोदकेनोप

लिप्य स्रुवेण वामादेशमात्रमुत्तरोत्तरक्रमेण प्रागग्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदं समुद्धृत्य वारि

णा तं देशमभ्युक्ष्य कांस्यपात्रस्थं वह्निं प्रत्यङ्मुखमुपसमाधाय ओं अद्य कर्त्तव्यान्नप्राशनहोमकर्म्मणि कृताकृतावेक्षण

रूपब्रह्मकर्म्मकर्त्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं

वृणुयात् ओं वृतोस्मीति प्रतिवचनं ओं यथाविहितं कर्म कुरु इति यजमानेनोक्ते ओं करवाणीति तेनोक्ते अग्नेर्दक्षिणतः शुद्ध

मासनं निधाय तदुपरि प्रागग्रान् कुशानास्तीर्य अग्निं प्रदक्षिणं कारयित्वा ब्रह्माणमुदङ्मुखं तत्रोपवेश्य अस्मिन्नन्नप्राशनहोम

कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ओं भवानीति तेनोक्ते प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखम

वलोक्याग्नेरुत्तरतोनिदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋ
त्याद्वायव्यांतं अग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रछेदनार्थंकुशत्रयं पवित्रकरणार्थंसाग्रम
नंतर्गर्भिकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली चरुस्थाली सम्मार्जनकुशाः उपयमनकुशाः प्रादेशमितपलाशस
मिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रं चर्वर्थास्तण्डुलाः एतानि
पवित्रछेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ततः पवित्रछेदनकुशैर्यजमानप्रादेशमितपवित्रछेदनं सपवित्र
करेणप्रणीतोदकं त्रिः प्रोक्षणीपात्रेनिधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रेपवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रं
सव्यहस्तेनगृहीत्वादक्षिणानामिकांगुष्ठाभ्यां पवित्रेगृहीत्वा त्रिरुद्दिंगनं ततः प्रणीतोदकेनप्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीज
लेनासादितवस्तुसेचनं अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्यात् ततः आज्यस्थाल्यामाज्यंनिरूप्य प्रणीतोदकेनतण्डुला
न्प्रक्षाल्य चरुपात्रेप्रणीतोदकंदत्वा तत्रतण्डुलान्प्रक्षिप्य स्वपंचरुंगृही ब्रह्मचाज्यंवह्नावुत्तरतश्चरुंदक्षिणतः आज्य

निदध्यात् ततः सिद्धे चरौ तरणा दिनप्रज्वाल्य उभयोरुपरि प्रदक्षिणं भ्रामयित्वा वन्हौ तत्प्रक्षेपः ततस्त्रिः स्रुवप्रतपनं सम्मार्जन
कुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् तत आज्यमग्नित
श्चरोः पूर्वेणानीयाग्रेधृत्वा आज्यपश्चिमेन चरुमानीयाज्यस्योत्तरतो निदध्यात् तत आज्यस्य प्रोक्षणीवत्त्रिरुत्पवनं अवेक्ष्यस
त्यपद्रव्येन निरसनं ततः प्रोक्षण्युत्पवनं तत उत्थाय उपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः स
मिधस्तिस्रः प्रक्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय ब्रह्मणा
न्वारब्धः पातितदक्षिणजानुः समिद्धतमेग्नौ जुहुयात् तत्र प्रथमाहुति चतुष्टये तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषस्य प्रो
क्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इंद्राय स्वाहा इदमिंद्राय इत्याघारौ ॐ अग्नये स्वाहा
इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततोऽनन्वारब्धेनासाधारणसाधारणाहुतिद्वय तत्र प्रथमाहुतिमंत्रः ॐ
देवीं वाचमजनयंत देवास्तां विश्वरूपाः पशवो वदंति सानो मंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा इदं वाचे द्वितीया

हुतिस्तु ओंदेवींवाचमित्यादिमंत्रः ओंवाजोनो अद्यप्रसुवातिदानं वाजोदेवाँ ऋतुभिःकल्पयाति वाजोहिमासर्ववीरं
जजानविश्वा आशावाजपतिर्जयेयथं स्वाहा इदंवाचेवाजाय इतिमन्त्राभ्यां ततःस्थालीपाकेनाहुतिचतुष्टयं ओंप्राणेना
न्नमशीयस्वाहा इदंप्राणाय ओंअपानेनगंधमशीयस्वाहा इदमपानाय ओंचक्षुषारूपाण्यशीयस्वाहा इदंचक्षुषे ओंश्रोत्रेण
यशोऽशीयस्वाहा इदंश्रोत्राय ततोब्राह्मणान्वारब्धकर्तृकोहोमः तत्रततदाहुत्यनंतरंस्रुवावस्थितहुतशेषद्रव्यस्यप्रोक्षण
णीपात्रेप्रक्षेपः तत्रैवाज्यस्थालीपाकाभ्यांस्विष्टकृत ओंअग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृतेततआज्येन ओंभूःस्वाहा
इदंभूः ओंभुवःस्वाहा इदंभुवः ओंस्वःस्वाहा इदंस्वः एतामहाव्याहृतयः ओंत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसी
ष्ठाःयजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाथंसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ओंसत्वन्नोअग्नेवमोभवोतीनेदि
ष्ठोअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुणथंरराणोवीहिमृडीकथंसुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां ओंअयाश्चाग्नेस्यन
भिशस्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञंवहास्यायानोधेहिभेषजथंस्वाहा इदमग्नये ओंयेतेशतंवरुणयेसहस्रंयज्ञि

याः पाशाविततामहान्तः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वे
भ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यः॥ॐउदुत्तमम्वरुणपाशमस्मदवाधमम्विमध्यम ठं श्रथाय अथावयमादित्यव्रतेतवानागसोअ
दितयेस्यामस्वाहा इदंवरुणाय इतिसर्वप्रायश्चित्तं ओंप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा इतिप्राजापत्यं अथ
संस्रवप्राशनं ततआचम्य ओमद्यकृतैतद्दत्तप्राशनहोमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदंपूर्णपात्रं
प्रजापतिदैवतममुकगोत्रायामुकशर्म्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ओंस्वस्तीति
प्रतिवचनं ततःप्रणीताविमोकः ओंसुमित्रियानआपओषधयःसन्तु इतिपठित्वा पवित्राभ्यांप्रणीताजलमानीयतेन
शिरःसम्मृज्य ओंदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः इत्यैशान्यांप्रणीतान्युब्जीकरणं ततस्तरणक्रमेण
वर्हिरुत्थाप्याज्येनाभिघार्यहस्तेनैवजुहुयात् ओंदेवागातुविदोगातुंवित्वागातुमित मनस्पतइमन्देवयज्ञ ठं स्वाहा वाते
धाः स्वाहा इतिवर्हिर्होमः अथसर्वान्कटुमधुरलवणादिरसान् सर्वाणिचशाल्यादीन्पत्रानियथासंभवमुद्धृत्यैकस्मिन्तु

द.क नमपात्रे कृत्वा कृतस्नानादिरलंकारादियुतो वालस्तूष्णीं ओंहंतइति मंत्रेण वा अन्नपतेन्नस्य नो देह्यनमीवस्य शु
१० ष्मिणः प्रप्रदातारन्तारिषऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे इत्यनेन वा प्राशनीयं अथ कुमारस्य वाक्प्रसरणकामेन भरद्वा
जमांसेन अन्नाद्यकामेन कपिंजलमांसेन मत्स्यं नजवनकामस्य आयुःकामेन कृकषमांसेन ब्रह्मवर्चसकामेन आटिमांसं स
र्वफलकामेन कथितसर्वमांसं कपिंजलः कटुआ गौरति तरइतिकेचित् अलाभे पिष्टकमयानां भरद्वाजप्रभृतीनामेकदेशः प्रा
शयितव्यः ततआचम्योत्थाय फलमूलपुष्पसमन्वितघृतेन स्रुवं परिपूर्य ओंमूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजा
तमग्निं कवि ठं सम्राजमतिथिञ्जनानामासन्नापात्रं जनयंत देवाः स्वाहा इतिमंत्रेण पूर्णाहुतिं दद्यात् ततउपविश्य भस्मानीय द
क्षिणानामिकाग्रगृहीतभस्मना ओंत्र्यायुषंजमदग्नेरिति ललाटे ओंकश्यपस्य त्र्यायुषमिति ग्रीवायां ओंयद्देवेषु त्र्यायुषमिति
दक्षिणबाहुमूले ओंतन्नो अस्तु त्र्यायुषमिति हृदि अनेनैव क्रमेण कुमारललाटादावपि तन्नो इत्यत्र तते अस्त्विति विशेषः गृ॰मं
ततो दूर्वाक्षतादिदानं ब्राह्मणानां भोजनञ्च इत्यन्नप्राशनम् ७ अथ चूडाकर्म्म तत्र संवत्सराभ्यंतरमादित्यादिशुद्धो उदग १०

यनस्यापूर्यमाणपक्षे शुक्रास्तादिदोषरहितरिक्तादिदोषरहिततसोमगुरुबुधशुक्रान्यतमवारविहितनक्षत्रसम।
न्वितायांतिथौ कृतनित्यक्रियो यजमानोमातृपूजाभ्युदयिकादिकृत्वा मण्डपे परिस्कृतभूमौ कुशंडिकामारभेत् तत्रक्रमः
कुशैर्हस्तमितांभूमिंपरिसमूह्य तानैशान्यांपरित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्र
मेणानामिकांगुष्ठाभ्यामुद्धृत्य वारिणातंदेशमभ्युक्ष्य कांस्यपात्रेणाग्निमानीय प्रत्यङ्मुखमग्नेरूपसमाधानंकुर्यात् ततोग्नेःप
श्चिमतो यजमानदक्षिणदिशि स्नापितमहतवासःपरिधाप्य कुमारमंके निधाय माता उपविशति ततः पुष्पचंदनताम्बूलवासां
स्यादाय ॐ अद्य कर्त्तव्य चूडाकरणहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुकशर्म्माणं ब्राह्मण
मेभिः पुष्पचंदनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् ॐ वृतोस्मीति प्रतिवचनं ॐ यथाविहितं कर्म कु
र्विति यजमानेनोक्ते ॐ करवाणीति प्रतिवचनं ततो यजमानोग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्या
ग्निं प्रदक्षिणं कारयित्वा अस्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति तेनोक्ते ब्रह्माणमुदङ्मुखं तत्रोपवेश्य

द०क० प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः
प० परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यांतं अग्नितः प्रणीताप
११ र्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रछेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणी
पात्रं आज्यस्थाली संमार्जनकुशाः समिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नामतण्डुल
पूर्णपात्रं पवित्रछेदनकुशानां पूर्वदिशि क्रमेणासादनीयानि अमीषामुत्तरे ततो साधारण्यवस्तूनुपकल्पनीयानि
तत्र शीतोदमुष्णोदकं घृतदधिनवनीतान्यतमः पिण्डः त्रिःश्वेतशल्लकीकंटकं खादिरसप्तविंशतिकुशपत्राणि लोहक्षु
रः नापितः वृषभगोमयपिण्डः अन्यदप्याचाराल्लिनीदलादि ततः पवित्रछेदनकुशैः पवित्रे छित्वा सपवित्रकरेण प्र
णीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रं वाम राम
हस्ते कृत्वा नामिकांगुष्ठगृहीतपवित्राभ्यां प्रोक्षणी जलमिंगनं क्षिप्य     प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीज ११

लेनासादितवस्तून्यभिषिंच्याग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्यात् आज्यस्थाल्यामाज्यंकृत्वाऽधिश्रित्यज्वलत्तृणा
दिकमादायाज्यस्योपरिप्रदक्षिणंभ्रामयित्वावन्हौतत्क्षिपेत् ततस्त्रिः स्रुवप्रतपनंसम्मार्जनकुशानामग्रैरंतरतोमूलैर्वा
ह्यः स्रुवंसम्मृज्यप्रणीतोदकेनाभ्युक्ष्यपूर्ववत्त्रिःप्रतप्यदक्षिणतोनिदध्यात् ततआग्नितःप्रदक्षिणक्रमेणाज्यमवतार्या
ग्रतोनिदध्यात् ततःप्रोक्षणीवत्त्रिराज्योत्पवनं अवेक्ष्यसत्यपद्रव्येतन्निरसनंपूर्ववत्प्रोक्षणापुत्पवनं ततउत्थायउपयमन
कुशानादायवामहस्तेकृत्वाप्रजापतिंमनसाध्यात्वातूष्णीमग्नौघृताक्ताः समिधस्तिस्त्रःप्रक्षिपेत् ततउपविश्यसपवित्रप्रो
क्षण्युदकेनप्रदक्षिणक्रमेणाग्निंपर्युक्ष्यप्रणीतापात्रेपवित्रेकृत्वा ब्रह्मणान्वारब्धःपातितदक्षिणजानुःसमिद्धतमेग्नौजु
हुयात् तत्रप्रत्याहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ॐप्रजापतयेस्वाहा इदंप्रजापतये १ इतिमनसा
ॐइन्द्रायस्वाहा इदमिन्द्राय २ इत्याघारौ ॐअग्नयेस्वाहा इदमग्नये ३ ॐसोमायस्वाहा इदंसोमाय ४ इत्याज्यभागौ ॐभूःस्वा
हा इदम्भूः ५ ॐभुवःस्वाहा इदम्भुवः ६ ॐस्वःस्वाहा इदंस्वः ७ एतामहाव्याहृतयः ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोऽ

अवयासिसीष्ठाः यजिष्ठोवन्हितमः शोशुचानोविश्वाद्वेषाᳫंसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ८ ॐसत्वन्नो अग्ने
अवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुणᳫंरराणोवीहिमृडीकᳫंसुहवोनएधिस्वाहा इदमग्निवरुणाभ्यां
९ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमयाअसि अयानोयज्ञम्वहास्ययानोधेहिभेषजᳫंस्वाहा इदमग्नये १० ॐयेतेशत
म्वरुणयेसहस्रंयज्ञियाःपाशाविततामहान्तः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहाः इदम्वरुणायस
वित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ११ ॐउदुत्तमम्वरुणपाशमस्मदवाधमम्विमध्यमᳫंश्रथाय अथावयमादित्यव्र
तेतवानागसोअदितयेस्यामस्वाहा इदम्वरुणाय १२ इतिसर्वप्रायश्चित्तं ॐप्रजापतयेस्वाहा इदंप्रजापतये १३ इतिमनसा इति
प्राजापत्यं ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते १४ इतिस्विष्टकृत् अथसंस्रवप्राशनं ततआचम्य ॐअद्यामुष्यकुमार
स्यकृतैतच्चूडाकरणहोमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्म्म
णेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्रददे इतिब्रह्मणेदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनं ततोब्रह्मग्रंथिविमोकः ततॐ

समस्तं शिरः प्रक्षाल्य ॐ अक्षण्वं परिवप इति नापिताय क्षुरं प्रयच्छति अथ नापितः शिखां धृत्वा समस्तशिरोवपनं यथाकुलं
वा कुर्यात् तांश्च केशान् नूतनवस्त्रेण पत्नी स्वमाता दधिभक्तदुग्धसमन्वितगोमयपिण्डोपरि निदध्यात् इति समाचारः पूर्ववत्पू
र्णाहुतिः ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनय
न्त देवाः स्वाहा इति मंत्रेण पूर्णाहुतिः ततउपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना त्र्यायुषं कु
र्यात् ॐ त्र्यायुषं जमदग्नेरिति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले ॐ
तन्नोऽस्तु त्र्यायुषमिति हृदि अनेनैव क्रमेण कुमारस्य ललाटादावपि तन्नस्तेऽस्तु इति विशेषः ततो दूर्वाक्षतादिग्र
हणं ततस्तान् केशान् सगोमयपिण्डान् गोष्ठे सरित्तीरे वा अन्यस्मिन्नुदकान्तरे वा निदध्यात् ततः आचार्याय गोदानादिकं इ
ति चूडाकरणं ८ अथ कर्णवेधः तत्र तृतीये वर्षे पंचमे वा पुष्येन्दुचित्राहरिरेवत्यन्तमनक्षत्रसमन्वितरिक्तातिरिक्त
तिथिपूर्वाह्णे पिता अन्यो वा पूर्वाभिमुखोपविष्टः कुमारस्य मधुरं दत्वा ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यज

द.क. त्राः स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः इति मंत्रेण दक्षिणकर्णमभिमंत्र्य ॐ वक्ष्यन्तीवेदागनीगन्ति
१३ कर्णं प्रियं सखायं परिषस्वजाना योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती। इति मंत्रेण वामकर्णमभि-
मंत्रयेत् ततो मध्यं वीक्ष्य नापितद्वारा वेधयेत् तस्मिन्समये मधुरादिदानं समाचरेत् ततो ब्राह्मणभोजनम् इति क-
र्णवेधः ॥ श्रीशङ्करायनमः शुभमस्तु ॥ श्रीरामयनमः श्रीगोपीजनवल्लभायनमः ॥ ० ॥

राम
१३

॥ॐश्रीगणेशायनमः अथोपनयनं तत्रशुद्धसमयेरविगुरुचंद्रतारादिशुद्धौजन्मतोगर्भाष्टमेऽब्देवानुकल्पेषोडशसंवत्सराभ्यं
तरेब्रह्मवर्चसकामस्यपंचमेशुदगयनआपूर्य्यमाणपक्षेनध्यायषष्ठीरिक्ताद्यतिरिक्ततिथौरविगुरुशुक्रान्यतमवारेमध्यान्हादर्वा
क् कुमारपित्राभ्युदयिकेकृतेतदभावेआचार्येणैवकृते ब्राह्मणान्माणवकंचभोजयित्वासशिखकृतक्षौरंस्नानानंतरंयथाश
क्त्यलंकृतंकृत्वा बहिःशालायांतुषकेशशर्करादिशून्यपरिष्कृतभूमौआचार्योग्निस्थापनंकुर्यात् तत्रहस्तमात्रपरिमितचतुर
स्रभूमिंकुशकरणकसमूहनानंतरंगोमयोदकेनोपलिप्यस्रुवमूलेनप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्यउल्लेखन
क्रमेणानामिकांगुष्ठाभ्याम्मृदमुद्धृत्यजलेनाभ्युक्ष्य नवीनकांस्यपात्रेणाग्निमानीयस्वाभिमुखंनिदध्यात् ततःकुमारमाचार्य्यः
शिष्यद्वाराग्नेःपश्चाद्दक्षिणपार्श्वेऽवस्थापयति ततःकुमारंबद्धांजलिंसंबोधयति ॐब्रह्मचर्यमागामितिब्रूहि इतिप्रैषानंतरं
ॐब्रह्मचर्यमागामितिकुमारआह ततःॐब्रह्मचार्यसानीतिब्रूहीत्याचार्येणोक्ते ॐब्रह्मचार्यसानीतिकुमारआह अथमा
णवकमाचार्योवासःपरिधापयति तत्रआचार्यपठनीयोमंत्रः ॐयेनेंद्रायबृहस्पतिर्वासःपर्य्यदधादमृतंतेनत्वापरिदधाम्यायु

इ·क·
उ·
१४

शिरीर्वायुत्वायबलायवर्चसे ततोमाणवकस्यद्विराचमनं अथमाणवकस्यवेष्टनत्रयेणनवप्रवरग्रंथियुतांमेखलामाचा
र्योबध्नाति तत्रमाणवकपठनीयोमंत्रः इयंदुरुक्तंपरिबाधमानावर्णंपवित्रंपुनतीमआगात् प्राणापानाभ्यांबलमादधानास्व
सादेवीसुभगामेखलेयं ॐयुवासुवासाःपरिवीतआगात् सउश्रेयान्भवतिजायमानःतंधीरासःकवयउन्नयंति स्वाध्योमनसादे
वयंत इतिवा ततआचार्ययज्ञोपवीतसहितभांडाष्टकंयंब्राह्मणेभ्योदत्वातत्सद्यामुकगोत्रःस्वकीयोपनयनकर्मविषयकस
संस्कारमात्मार्थेइदंभांडाष्टकंयंसयज्ञोपवीतंसदक्षिणंयथानामेति ततोयज्ञोपवीतंपरिधातिमाणवकःॐयज्ञोपवीतमिति
मंत्रस्यपरमेष्ठीऋषिर्लिंगोक्तादेवतात्रिष्टुप्छंदोयज्ञोपवीतपरिधानेविनियोगःॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुर
स्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः इतिमंत्रेण ततऐणेयमजिनंतूष्णींपरिधत्ते ततोमाणवककेशपरि
मितपालाशदंडमाचार्यःतूष्णींतस्मैप्रयच्छति तंचयोमेदंडइतिप्रजापतिऋषिर्दंडोदेवतायजुर्दंडग्रहणेविनियोगः योमेदंडः
परापतद्वैहायसोधिभूम्यां तमहंपुनराददआयुषेब्रह्मणेब्रह्मवर्चसाय इतिमंत्रेणमाणवकोगृह्णाति ततआचार्योवारिणास्वमं

स्म·
१४

जलिंपूरयित्वाकुमारस्यांजलिंतेनैवांजलिजलेनपूरयति ॐआपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन महेरणायचक्षसे ॐयो
वः शिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः ॐतस्माअरंगमामवोयस्यक्षयायजिन्वथ आपोजनयथाचनः इतिऋ
ग्भिः ततः सूर्यमुदीक्षस्वेतिआचार्यप्रैषानंतरं ॐतच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् पश्येमशरदःशतंजीवेमशरदःशतꣳ
२५ शृणुयामशरदःशतंप्रब्रवामशरदःशतमदीनाःस्यामशरदःशतंभूयश्चशरदःशतात् इत्यनेनादित्यंपश्यति अथकुमारस्य
दक्षिणांसंसहृदयंदक्षिणहस्तेनस्पृशत्याचार्यः ॐममव्रतेतेहृदयंदधामि ममचित्तमनुचित्तंतेअस्तु ममवाचमेकमनाजुषस्व
बृहस्पतिष्ट्वानियुनक्तुमह्यं इतिमंत्रेण ततःकुमारस्यदक्षिणहस्तंगृहीत्वातंपृच्छतिकोनामासि श्रीअमुकशर्माहंभो इतिकु
मारआह कस्यब्रह्मचार्यसीत्याचार्यः भवत इतिकुमारआह पुनराचार्योभाषते ॐइंद्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमा
चार्यः श्रीअमुकशर्मन् अथमाणवकंबद्धांजलिंपूर्वादिदिक्षुप्रदक्षिणमुपस्थानंकारयति अथाचार्योमाणवकंभूतेभ्यःपरिददा
ति तत्रआचार्यस्यमंत्रपाठः ॐप्रजापतयेत्वापरिददामीतिप्राच्यां ॐदेवायत्वासवित्रेपरिददामि इतिदक्षिणस्यां ॐअद्भ्य

द.क. स्त्वौषधीभ्यः परिददामि इति प्रतीच्यां ॐ द्यावापृथिवीभ्यांत्वा परिददामि इति उदीच्यां ॐ विश्वेभ्यस्त्वा देवेभ्यः परिददामि इत्यधः
उ० ॐ सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्द्ध्वं ततोग्निं प्रदक्षिणीकृत्य आचार्य्यो दक्षिण दिशि उपविशति माणवकः ततः
१५ पुष्पचंदनतांबूलवासांस्यादाय ततः ॐ मद्य कर्त्तव्योपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममु
कशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोस्मीति प्रतिवचनं पु
ष्पचंदनतांबूलवस्त्राण्यादाय अद्यकर्त्तव्योपनयनकर्म्मणि होतृत्वकर्मकर्तुं अमुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्प
चंदनतांबूलवासोभिः होतृत्वेन त्वामहं वृणे इति होतारं वृणुयात् स्वस्तीति प्रतिवचनं ॐ यथाविहितं कर्म्म कुर्विति आचार्य्येणो
क्ते ॐ करवाणीति ब्राह्मणो वदेत् ततोग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशनास्तीर्य्य ब्रह्माणमग्निं प्रदक्षिणं का
रयित्वास्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय भवानीति तेनोक्ते तदुपरि ब्राह्मणमुदङ्मुखमुपवेश्य ततः प्रणीतापात्रं पुर एम.
तः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं वर्हिषश्चतुर्थ १५

भागमारभ्याग्नेयादीशानान्तं ब्रह्मणोग्निपर्यन्तं नैर्ऋताद्वायव्यान्तं अग्नितः प्रणीतापर्यन्तं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्र
छेदनार्थं कुशत्रयं पवित्रार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्जनार्थं कुशाः उपयमनकुशाः समि
धस्तिस्रः स्रुवः आज्यं षट्पञ्चाशदुत्तरवार्यमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रं पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेण
सादनीयं ततः पवित्रच्छेदनकुशैः पवित्रे छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकाङ्गुष्ठाभ्यां गृही
तपवित्राभ्यां तज्जलं किंचित्त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वाऽग्निप्रणीतयो
र्मध्ये प्रोक्षणीपात्रं निदध्यात् आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततः कुशं प्रज्वाल्याज्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ
तत्प्रक्षिप्य स्रुवं त्रिः प्रतप्य संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षि
णतो निदध्यात् तत आज्यमग्नेरवतार्य त्रिः प्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः प्रोक्षण्युत्पवनं तत उत्थायोप
यमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्तास्तिस्रः समिधः प्रक्षिपेत् उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षि

द. क. णक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहोति त
उ. त्र तत्र दाहुत्यनन्तरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इन्द्राय स्वाहा इ
१६ दमिन्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इ
दं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शो
शुचानो विश्वा द्वेषाᳪंसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐ स त्वन्नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अ
वयक्ष्व णो वरुणᳪं रराणो वीहि मृडीकᳪं सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्व
मया असि अयानो यज्ञं वहास्ययानो धेहि भेषजᳪं स्वाहा इदमग्नये ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महा
न्तः तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वा राम
र्केभ्यः ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमᳪं श्रथाय अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा इदं १६

भागमादायाग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋतात्वायव्यांत अग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदि
शि पवित्रछेदनार्थं कुशत्रयं पवित्रार्थं साग्रमनंतर्गर्भं कुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्ज्जनार्थं कुशाः उप
यमनकुशाः समिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरशतवार्यमुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णपात्रं पवित्रछेदनकुशानां पूर्व
पूर्वदिशि क्रमेणासादनीयं ततः पवित्रछेदनकुशैः पवित्रेछित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अना
मिकांगुष्टाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचित्त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं
कृत्वाऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततः कुशं प्रज्वाल्याज्योपरि प्रदक्षिणं
भ्रामयित्वा वह्नौ तत्प्रक्षिप्य स्रुवं त्रिः परितप्य संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः
प्रतप्य दक्षिणतो निदध्यात् तत आज्यमग्नेरवतार्य त्रिः प्रोक्षणीनदुत्पूयावेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः प्रोक्षण्युत्पवनं तत उ
त्थायोपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसाध्यात्वा तूष्णीं घृताक्तास्तिस्रः समिधः प्रक्षिपेत् उपविश्य सपवित्रप्रोक्षण्युदके

नप्रदक्षिणक्रमेणाग्निपर्युक्ष्य प्रणीतापात्रेपवित्रेनिधायपातितदक्षिणजानुः ब्रह्मणान्वारब्धः समिद्धतमेग्नौस्रुवेणाज्याहु
तिर्जुहोति तत्रतत्तदाहुत्यनंतरंस्रुवावस्थितघृतशेषस्यप्रोक्षणीपात्रेप्रक्षेपः ॐप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा
ॐइंद्रायस्वाहा इदमिंद्राय इत्याघारौ ॐअग्नयेस्वाहा इदमग्नये ॐसोमायस्वाहा इदंसोमाय इत्याज्यभागौ ॐभूः स्वाहा इदं
भूः ॐभुवःस्वाहा इदंभुवः ॐस्वःस्वाहा इदंस्वः एतामहाव्याहृतयः ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाःयजि
ष्ठोवन्हितमःशोशुचानोविश्वाद्वेषाᳬंसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याउ
षसोव्युष्टौ अवयक्ष्वणोवरुणᳬंरराणोवीहिमृडीकᳬंसुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां ॐअयाश्चाग्नेस्यनभिशस्ति
पाश्चसत्वमित्वमयाऽअसि अयानोयज्ञंवहास्ययानोधेहिभेषजᳬंस्वाहा इदमग्नये ॐयेतेशतंवरुणयेसहस्रंयज्ञियापाशावि
तितामहांतः तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः
स्वर्केभ्यः ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमᳬंश्रथाय अथावयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा

इदं वरुणाय एताः सर्वप्रायश्चित्तसंज्ञकाः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा प्राजापत्यम् ॐ अग्नये स्विष्टकृ
ते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृद्धोमः ततः संस्रवप्राशनं आचमनं च ततो ब्रह्मणे दक्षिणादानं ॐ अद्यस्मिन्
स्मिन्नुपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं अमुकगोत्रायामुक
शर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः
ततः ॐ सुमित्रिया न आप ओषधयः संतु इति पवित्राभ्यां जलमानीय तेन शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यं
च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणं ततस्तरणक्रमेण बर्हिरुत्थाप्य घृतेनाभिघार्य हस्तेनैव जुहुयात् ॐ देवा गातु
विदो गातुं वित्त्वा गातुमित मनसस्पत इमं देव यज्ञं स्वाहा वाते धाः स्वाहा इति बर्हिर्होमः तत आचार्यः कुमारस्यानुशासनं क
रोति ॐ ब्रह्मचार्यसीत्याचार्यः ॐ असानीति ब्रह्मचारी ॐ अपोऽशानेत्याचार्यः ॐ अश्नानीति कुमार आह ॐ कर्म कुर्वित्या
चार्यः ॐ करवाणीति माणवकः ॐ मा दिवा सुषुप्सेत्याचार्यः न स्वपानीति कुमारः ॐ वाचं यच्छेत्याचार्यः ॐ यच्छानीति कुमा

ः ॐ समिधमाधेहीत्याचार्य्यः ॐ आदधानीति माणवकः ॐ अपो अशानेत्याचार्य्यः ॐ अशानीति कुमारः अथाग्नेरुत्तर
तः प्रत्यङ्मुखायोपविष्टायाचार्य्यचरणोपसंग्रहणपूर्वकमुपसन्नायाचार्य्यसमीक्ष्यमाणाचार्य्यः स्वयमपिसमीक्षिताया-
स्मैविवारितशंखतूर्य्यादिशब्द इष्टांसके सावित्रीमन्वाह तत्रप्रथमावृत्तौ ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधि
योयोनः प्रचोदयात् ॐ पुनर्वारद्वयं अत्रतु सह पाठो विशेषः अथमाणवकआचार्य्यदक्षिणदिशिअग्निपश्चमोपविष्टो
घृताक्तशुष्कनिषिद्धेतरेधनेनजुहुयात् ततः ॐ अग्नेसुश्रवः सुश्रवसंमाकुरु ॐ यथात्वमग्नेसुश्रवः सुश्रवा असि ॐ एवं
माꣳ सुश्रवः सौश्रवसंकुरु ॐ यथात्वमग्ने देवानां यज्ञस्य निधिपा असि ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्
ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य उत्थाय स्वप्रादेशमितां घृताक्तपलाशसमिधमादाय ॐ अग्नये समिधमाहार्षं बृहते
जातवेदसे यथात्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिंधे जीवपुत्रो ममाचार्य्यो
मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा इतिमंत्रेण जुहुयात् एवं समिदंतरद्वयं पञ्च

हुयात् ओं अग्ने सुश्रवः सुश्रवसं मा कुरु ओं यथा त्वमग्ने सुश्रवः सुश्रवा असि ओं एवं मां सुश्रवः सौश्रवसं कुरु ओं यथा त्वमग्ने दे
वानां यज्ञस्य निधिपा असि ओं एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ततः प्रदक्षिणमग्निं पर्युक्ष्य तूष्णीं पाणी प्रतप्य मु
खं प्रति मंत्रांते ऽवमृशति ओं तनूपा अग्नेऽसि तन्वं मे पाहि ओं आयुर्दा अग्नेऽस्यायुर्मे देहि ओं वर्चोदा अग्नेऽसि वर्चो मे देहि ओं अग्ने य
न्मे तन्वा ऊनं तन्म आपृण ओं मेधां मे देवः सविता आदधातु ओं मेधां मे देवी सरस्वती आदधातु ओं मेधामश्विनौ देवावाधत्तां पु
ष्करस्रजौ ततः सर्वगात्रादिषु दक्षिणपाणिना स्पर्शः अत्र प्रत्येकं मंत्रः ओं अंगानि च म आप्यायताम् इति सर्वगात्रालंभने ओं
वाक्च म आप्यायतामिति मुखालंभने ओं प्राणश्च म आप्यायतामिति नासिकयोः ओं चक्षुश्च म आप्यायतामिति चक्षुषोः ओं श्रोत्रं
च म आप्यायतामिति श्रोत्रे ओं यशो बलं च म आप्यायतामिति मंत्रपाठमात्रं ततो दक्षिणकरानामिकाग्रगृहीतभस्मना ललाटे ग्री
वायां दक्षिणबाहुमूले हृदि च त्र्यायुषं कुर्यात् तत्र यथासंख्येन मंत्रचतुष्टयं ओं त्र्यायुषं जमदग्नेः इति ललाटे ओं कश्यपस्य त्र्यायुषम्
इति ग्रीवायां ओं यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले ओं तन्नो अस्तु त्र्यायुषम् इति हृदि ततो व्यस्तपाणिभ्यां पृथिवीं स्पृशन्नभिवा

स्नं कुर्य्यात् तत्रप्रकारः ओं अमुकगोत्रोहममुकप्रवरोहममुकशर्म्माहं भो वैश्वानर त्वामभिवादये ततोनेनैव क्रमेण संबोध्य वृहन्मभिवाद्याचार्य्यं तथैवाभिवादयेत् ततः आयुष्मान्भव सौम्येत्याचार्य्यो ब्रूयात् ततो भिक्षापात्रमादाय प्रथमं मातुः सकाशात् ओं भवति भिक्षां मे देहि इति प्रार्थनानंतरं तद्दत्तां चादायाचार्य्याय निवेदयेत् तथैव भिक्षांतरं याचेत् ततः आचार्य्येण भुंक्ष्वेत्यनुज्ञातो भिक्षां स्वीकुर्य्यात् ततः फलपुष्पचंदनघृतपूर्णस्रुवेण ब्रह्मचारिदक्षिणकरस्पृष्टेनाचार्य्यः पूर्णाहुतिं दद्यात् तत्र मंत्रः ओं मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयंत देवाः स्वाहा इदमग्नये ततः स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ओं त्र्यायुषं जमदग्नेः इति ललाटे ओं कश्यपस्य त्र्यायुषम् इति ग्रीवायां ओं यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले ओं तन्नो अस्तु त्र्यायुषम् इति हृदि इति त्र्यायुषं कुर्य्यात् कुमारं प्रेक्षेत त्र्यायुषमुच्चरन्नेतन्नेत इति विशेषः अथ क्षारलवणमधुमांसादिनिवृत्तिः उद्धृतजलस्नानं दंडकृष्णाजिनधारणं वृक्षारोहणविषमभूमिलंघनगमनस्त्रीनिरीक्षणस्त्रीसंभोगव्यसनव्यावृत्तिरूपा ब्रह्मचारिणो नियमाः तद्दिने ब्रह्मचारी वाग्यतो हः

ग्रोऽयं स्थित एवं गमयेत् ततः सायंसंध्यां कृत्वा तस्मिन्नेवाग्नौ पूर्ववत्पर्युक्षणपरिसमूहने कृत्वा वाचं विसृजेत् परिसमूहनं नु
स्रुक्षु निषिद्धेतरेंधनस्याग्नौ प्रक्षेपः ततः संध्यामुपास्य प्रतिदिनं सायंप्रातरपि ब्रह्मचारिणा कर्त्तव्या अथ वेदारंभः तत्र कृतनि
त्यक्रिय आचार्यः कुशैर्हस्तमात्रपरिमितां भूमिं परिसमूह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन उ
त्तरोत्तरतः प्रागग्रप्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यामुद्धृत्य जलेनाभ्युक्ष्य कांस्येनाग्निमानीयाभिमुख
मुपसमाधाय पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्य कर्त्तव्यवेदारंभहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकशर्म्मा
णं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोऽस्मीति प्रतिवचनं ॐ यथाविहितं क
र्म कुर्वित्याचार्यः ॐ करवाणीति तेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्र
मेणभ्रामयित्वा अस्मिन्कर्म्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति तेनोक्ते ब्रह्माणमुदङ्मुखं तत्रोपवेश्य प्रणीतापात्रं पुरतः कृ
त्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय

आग्नेयादीशानांतम् ब्रह्मणोग्निपर्य्यंतम् नैर्ऋत्याद्वायव्यांतम् अग्नितः प्रणीतापर्य्यंतं ततोग्निहत्तरतः पश्चिमदिशि पवित्र
छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रमाज्यस्थाली संमार्ज्जनकुशाः उपयमनकुशाः स
मिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रं पवित्रछेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयं ततः पवित्रछेदनकुशैः पवित्रे छित्त्वा
सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रो
क्षणीपात्रं वामहस्ते गृहीत्वा दक्षिणहस्तानामिकांगुष्ठाभ्यां त्रिरुद्दिंगनम् ततः प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य प्रोक्ष
णीजलेन यथासादितवस्तून्यभिषिच्याग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ततआज्यस्थाल्यामाज्यं निरूप्याधिश्र
यणम् ततः कुशं प्रज्वाल्याज्यस्याग्नेश्चोपरि प्रदक्षिणं भ्रामयित्वाग्नौ तत्प्रक्षेपः ततस्त्रिः स्रुवप्रतपनं संमार्ज्जनकुशाना
मग्रैरंततो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् ततआज्यमग्निप्रदक्षि
णं भ्रामयित्वावतार्याग्रे निदध्यात् ततआज्ये प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं ततः प्रोक्षण्युत्पवनं ततउ

त्थायो पयमनकुशानादाय प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौ घृताक्तास मिधस्तिस्रः क्षिपेत् तत उपविश्य सपवित्रप्रोक्ष
एयुदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय ब्रह्मणान्वारब्धः पातितदक्षिणजानुः समिद्धतमेग्नौ जुहु
यात् तत्र प्रथमाहुतिचतुष्टयेन श्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति
मनसा ॐ इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततः प्रा
कृतोऽन्वारब्धकर्तृको होमः ॐ अंतरिक्षाय स्वाहा इदमंतरिक्षाय ॐ वायवे स्वाहा इदं वायवे ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ॐ
छंदोभ्यः स्वाहा इदं छंदोभ्यः एता सामान्याहुतयः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ देवेभ्यः स्वाहा इदं देवेभ्यः
ॐ ऋषिभ्यः स्वाहा इदं ऋषिभ्यः ॐ श्रद्धायै स्वाहा इदं श्रद्धायै ॐ मेधायै स्वाहा इदं मेधायै ॐ सदसस्पतये स्वाहा इदं सदसस्प
तये ॐ अनुमतये स्वाहा इदमनुमतये ततोऽन्वारब्धकर्तृको होमः तत्र दाहुत्यनंतरं श्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे
प्रक्षेपः ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नोऽअग्नेवरुणस्य विद्वान्देवस्य

हेडोअवयासिसीष्टाः यजिष्टोवन्हितमः शोशुचानोविश्वाद्वेषा ७ सिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐसत्वन्नोअग्नेव
मोभवोतीनेदिष्टोअस्याउषसोव्युष्टौ अवयक्ष्वनोवरुण ठं॰ रराणोवीहिमृडीक ठं॰ सुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां ॐअ
याश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमया असि अयानोयज्ञंवहास्ययानोधेहिभेषज ७ स्वाहा इदमग्नये ॐयेतेशतंवरुणयेस
हस्रंयज्ञियाः पाशावितताभहांतः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्काः स्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्यो
देवेभ्योमरुद्भ्यः स्वर्केभ्यः ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यम ७ श्रथाय अथावयमादित्यव्रतेतवानागसोअदितयेस्याम
स्वाहा इदंवरुणाय इतिसर्वप्रायश्चितसंज्ञकाः ॐप्रजापतयेस्वाहा इदंप्रजापतये इतिमनसा इतिप्राजापत्यं ॐअग्नयेस्विष्टकृते
स्वाहा इदमग्नयेस्विष्टकृते इतिस्विष्टकृद्धोमः ततः संस्रवप्राशनम् ततआचम्य ॐअद्यकृतैतद्विवाहांगभूतहोमकर्मणःकृताकृतावे
क्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्रददे
इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनं ततोब्रह्मग्रंथिविमोकः ॐसुमित्रियानआपओषधयःसंतु इतिपवित्राभ्यांप्रणीताजल

मानीयतेन शिरः संमृज्य ओंदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंचद्विष्मः इतिमंत्रेणऐशान्यांप्रणीतान्युब्जीकुर्य्यात्
ततस्तरणावर्हिरानीयघृतेनाभिधार्य्यहस्तेनक्रमेणानेवजुहुयात् ओंदेवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञ॑छं
स्वाहा वातेधाः स्वाहा इतिबर्हिर्होमः ततः काश्मीरगमनं ततइष्टांसकेवेदारंभगुरुः कारयेत् तत्रक्रमः ओंभूर्भुवःस्वः तत्सवि
तुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात्ओ इतिप्रणवांतंपठित्वा पंक्तिनमस्कारंचकारयित्वा ओंसमिधाग्निन्दुवस्यत
घृतैर्बोधयतातिथिम् अस्मिन्हव्याजुहोतन सुसमिद्धायशोचिषे इतिकंडिकांतरंवाफक्किकांवापाठयेत् ततःसप्रणवंस्वस्ति
वाचयित्वा उत्थायफलपुष्पसमन्वितब्रह्मचारिदक्षिणकरस्पृष्टेनघृतपूर्णेनपूर्णाहुतिंदद्यात् ओंमूर्द्धानंदिवोअरतिंपृथिव्या
वैश्वानरमृतआजातमग्निंकविꣳ संम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः इतिपूर्णाहुतिः ततउपविश्यस्रुवेणभस्मानी
यदक्षिणानामिकाग्रगृहीतभस्मनाञ्यायुषंजमदग्नेरितिललाटे ओंकश्यपस्यत्र्यायुषमितिग्रीवायां ओंयद्देवेषुत्र्यायुषं इतिद
क्षिणबाहुमूले ओंतन्नोअस्तुत्र्यायुषमितिहृदि अनेनैवक्रमेणब्रह्मचारिललाटादावपि तत्रतन्नेइतिविशेषः इतिवेदारंभः॥

अथसमावर्त्तनं तत्रशुभेदिनेप्रह्वीभूयआचार्य्यंस्नास्यामीतिकुमारआचार्य्यंभाषते तत्रस्नास्याहीत्याचार्य्यः ततोब्रह्मचारि
णिआचार्य्यसन्निहितदक्षिणदिशिउपविष्टेकृतस्नानादिराचार्य्यः कुशैर्हस्तमात्रांभूमिंपरिसमूह्यतान्ऐशान्यांपरित्यज्य गोम
योदकेनोपलिप्य स्रुवमूलेनोत्तरोत्तरक्रमेणत्रिरुल्लिख्यउल्लेखनक्रमेणोद्धृत्यजलेनाभ्युक्ष्य कांस्येनाग्निमानीयप्रत्यङ्मुखंनि
दध्यात् ततःपुष्पचंदनतांबूलवासांस्यादाय ओंअद्यामुकस्यकर्त्तव्यसमावर्त्तनहोमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्म
कर्तुममुकगोत्रममुकशर्म्माणंब्राह्मणमेभिःपुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे वृतोस्मीतिप्रतिवचनं यथाविहि
तंकर्मकुर्वित्यभिधाय ओंकरवाणीतितेनोक्तेअग्नेर्दक्षिणतः शुद्धमासनंदत्वा तदुपरिप्रागग्रान्कुशानास्तीर्य्यास्मिन्कर्म्मणित्वं
मेब्रह्माभवेत्यभिधाय ओंभवानीतितेनोक्ते ब्राह्मणमुदङ्मुखंतत्रोपवेश्य ततःप्रणीतापात्रंपुरतःकृत्वा वारिणापरिपूर्य्यकु
शैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतःकुशोपरिनिदध्यात् ततःपरिस्तरणं वर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतं
ब्रह्मणोग्निपर्य्यंतं नैर्ऋत्यादवायव्यांतं अग्नितःप्रणीतापर्य्यंतं ततोग्नेरुत्तरतःपश्चिमदिशिपवित्रछेदनार्थंकुशत्रयम् पवि

त्रकरणार्थंसाग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्जनार्थकुशाः उपयमनकुशाः समिधस्तिस्रः
स्रुवः आज्यंपूर्णपात्रं पवित्रछेदनकुशानांपूर्वपूर्वोदिशिक्रमेणासादनीयम् ततः पवित्रछेदनकुशैः पवित्रे छित्वासपवि
त्रकरेणप्रणीतोदकं त्रिः प्रोक्षणीपात्रेनिधायानामिकांगुष्ठाभ्यांपवित्रेगृहीत्वात्रिरुत्पूय प्रोक्षणीपात्रंवामकरेणदायानामि
कांगुष्ठगृहीतपवित्राभ्यांतज्जलंकिंचित्रिःप्रक्षिप्य प्रणीतोदकेनप्रोक्षणीमभ्युक्ष्य प्रोक्षणीजलेनयथासादितवस्तून्यभिषि
च्याग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्यात् तत आज्यस्थाल्यामाज्यनिर्वापः अधिश्रयणं ततस्तृणंप्रज्वाल्याज्यस्याग्रेश्रोप
रिप्रदक्षिणंभ्रामयित्वावह्नौतत्प्रक्षिप्यस्रुवं त्रिःप्रतप्यसंमार्जनकुशानामग्रैरंतरतो मूलैर्वाह्यतः स्रुवं संमृज्य प्रणीतोदके
नाभ्युक्ष्य पुनःप्रतप्यस्वस्यदक्षिणतोनिदध्यात् ततआज्यमग्निप्रदक्षिणंभ्रामयित्वावतार्य त्रिःप्रोक्षणीवदुत्पूयावेक्ष्य
सत्यपद्रव्येतन्निरसनं कृत्वापुनः पूर्ववत्प्रोक्षणपुत्पवनम् ततउत्थायोपमनकुशान्वामहस्तेकृत्वाप्रजापतिंमनसाध्यात्वातू
ष्णीमग्नौघृताक्ताः समिधस्तिस्रःक्षिपेत् ततउपविश्यसपवित्रप्रोक्षणपुदकेनप्रदक्षिणाक्रमेणाग्निंपर्युक्ष्यप्रणीतापात्रेपवित्रे

निधाय पातितदक्षिणजानुः समिद्धतमेऽग्नौ ब्रह्मणान्वारब्धः स्रुवेणाज्याहुतीर्जुहुयात् तत्र प्रथमाहुतिचतुष्टये प्रत्याहुत्य
नंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इन्द्राय स्वाहा इद
मिन्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ततोऽन्वारब्धकर्तृक होमः ॐ अंत
रिक्षाय स्वाहा इदमंतरिक्षाय ॐ वायवे स्वाहा इदं वायवे ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यः ॐ प्रजा
पतये स्वाहा इदं प्रजापतये इति मनसा ॐ देवेभ्यः स्वाहा इदं देवेभ्यः ॐ ऋषिभ्यः स्वाहा इदमृषिभ्यः ॐ श्रद्धायै स्वाहा इदं
श्रद्धायै ॐ मेधायै स्वाहा इदं मेधायै ॐ सदसस्पतये स्वाहा इदं सदसस्पतये ॐ अनुमतये स्वाहा इदमनुमतये ततो ब्रह्मणाऽन्वा
रब्धो जुहुयात् अत्राहुतिदशतये तत्तदाहुत्यनंतरं स्रुवावस्थिताज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इ
दं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशु
चानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां ॐ स त्वन्नो अग्नेवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणं

रुणो ब्रीहि मृडीक सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमया असि अयानो
यज्ञं वहास्ययानो धेहि भेषजं स्वाहा इदमग्नये ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो अद्य सवि
तोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ॐ उदुत्तमं वरुण पाश
मस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा इदं वरुणाय इति सर्वप्रायश्चित्तं
ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा इति प्राजापत्यम् ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्ट
कृत् ततः संस्रवप्राशनम् ततआचम्य ॐ अद्य कृतैतत्समावर्त्तनहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पू
र्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॐ स्वस्तीति प्र
तिवचनं ततो ब्रह्मग्रन्थिविमोकः ततः पवित्राभ्यां प्रणीताजलेन ॐ सुमित्रिया न आप ओषधयः सन्तु इति मन्त्रेण शिरः संमृज्य ॐ दुर्मि
त्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यं च वयं द्विष्मः इति मन्त्रेणैशान्यां प्रणीतान्युब्जीकरणं ततस्तरणक्रमेण बर्हिरानीय घृतेनाभिघार्य ह

स्तेनैवजुहुयात् ॐदेवोगातुविदोगातुंकिवागातुमितमनसस्पतइमंदेवयज्ञं स्वाहा वातेधाः स्वाहा इतिवर्हिर्होमः
ततोब्रह्मएणान्वारब्धकर्तृकंकर्म्म ततोग्निपश्चिमोपविष्टोब्रह्मचारिपरिसमूहनंकुर्य्यात् ततघृताक्तस्रुषा निषिद्धेतरेधनेन
पंचाहुतीर्हस्तेनैवजुहुयात् ॐअग्नेसुश्रवः सुश्रवसंमाकुरु ॐयथात्वमग्नेसुश्रवः सुश्रवाअसि ॐएवंमांसुश्रवः सौश्रवसंकुरु
ॐयथामग्नेदेवानांयज्ञस्यनिधिपाअसि एवमहंमनुष्याणांवेदस्यनिधिपोभूयासम् ततःप्रदक्षिणमग्निंवारि... पर्युक्ष्य उ
त्थायघृताक्तांप्रादेशमितसमिधमादायजुहुयात् तत्रमंत्रः ॐअग्नयेसमिधमाहार्षंबृहतेजातवेदसेयथात्वमग्नेसमिधा
समिध्यस एवमहमायुषामेधयावर्च्चसाप्रजयापशुभिर्ब्रह्मवर्च्चसेन समिंधजीवपुत्रोममाचार्योमेधाव्यहमसान्यनिरा
करि स्नुर्यशस्वीतेजस्वीब्रह्मवर्च्चस्यन्नादोभूयासंस्वाहा ततःसमिदंतरद्वयमनेनैवक्रमेणप्रत्येकंहुत्वा उपविश्य तेनैवक्र
मेणपंचाहुतीर्घृताक्तास्रुषानिषिद्धेतरेंधनेनजुहुयात् ॐअग्नेसुश्रवः सुश्रवसंमाकुरु ॐयथात्वमग्नेसुश्रवः सुश्रवाअसि ॐ
एवंमांसुश्रवः सौश्रवसंकुरु ॐयथात्वमग्नेदेवानांयज्ञस्यनिधिपाअसि ॐएवमहंमनुष्याणांवेदस्यनिधिपोभूयासम् ततः

५५

प्रदक्षिणमग्निं वारिणा पर्युक्ष्य तूष्णीं पाणी प्रतप्य मुखं प्रतिमं त्रांते वमृशति ओं तनूपा अग्नेसि तन्वं मे पाहि ओं आयुर्दा अ
ग्नेस्यायुर्मे देहि ओं वर्चोदा अग्नेसि वर्चो मे देहि ओं अग्ने यन्मे तन्वा ऊनं तन्म आपृण ओं मेधां मे देवः सविता आदधातु ओं मेधां
मे देवी सरस्वती आदधातु ओं मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ तत्र सर्वगात्रादिषु दक्षिणपाणिना स्पर्शः तत्र प्रत्येकं
मंत्रः ओं अंगानि च म आप्यायंताम् इति सर्वगात्रालंभने वाक्च म आप्यायतामिति मुखालंभने ओं प्राणश्च म आप्यायतामिति
नासिकयोः ओं चक्षुश्च म आप्यायतामिति चक्षुर्द्वयस्पर्शः ओं श्रोत्रं च म आप्यायतामिति श्रोत्रद्वयस्पर्शः ओं यशो बलं च म आप्याय
तामिति मंत्रपाठमात्रं ततो दक्षिणानामिकाग्रगृहीतभस्मना ललाटे ग्रीवायां दक्षिणबाहुमूले हृदि च त्र्यायुषं कुर्यात् यथासंख्ये
न मंत्रचतुष्टयम् ओं त्र्यायुषं जमदग्नेरिति ललाटे ओं कश्यपस्य त्र्यायुषं इति ग्रीवायां ओं यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले
ओं तन्नो अस्तु त्र्यायुषं इति हृदि ततो व्यस्तपाणिभ्यां पृथिवीं स्पृशन् प्रथमं वैश्वानरं संबोध्याभिवादयेत् तत्रामुकगोत्रोहममुक
प्रवरोहममुकशर्माहं भो वैश्वानर त्वामभिवादये इति प्रकारः ततस्तथैव वरुणं संबोध्याभिवादयेत् तथैवाचार्यं चाभिवादये

द॰ क॰ उ॰ २५

ततः आयुष्मान्भव सोम्य इत्याचार्यो ब्रूयात् ततो ग्रेहन्तरतः प्रागग्रान्कुशानास्तीर्य तदुपरि दक्षिणोत्तरक्रमेण सारित
वारिपूर्णकलशाष्टतयेकलशानां पुरतः प्रागग्रेषु कुशेषु स्थित्वा एकस्मादाम्रपल्लवेनोदकं गृहीत्वा ॐ ये प्सन्तरग्नयः प्र
विष्टा गोह्य उपगोह्यो मयूषो मनोहा स्खलो विरुजस्तनूदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि इति मंत्रेण
ततस्तेन मामभिषिंचामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय इत्यात्मानमभिषिंचति ततो द्वितीयघटस्थमुदकं गृहीत्वाम्र
पल्लवेनाभिषिंचति ॐ येन श्रियमकृणुतां येनावमृशतां सुरां येनाक्षावभ्यषिंचतां यद्वां तदश्विना यशः इति मंत्रेण ततस्ते
नैव क्रमेण तृतीयकलशस्थजलमादाय ॐ आपो हि ष्ठा मयोभुवस्तान ऊर्ज्जे दधातन महे रणाय चक्षसे इति मंत्रेणाभिषिच्य
तेनैव क्रमेण चतुर्थकलशस्थजलमादाय ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः इति मंत्रेणाभिषिच्य
पंचमकलशस्थजलं तथैवादाय ॐ तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च न इति मंत्रेणाभिषिच्य ।
ततो वशिष्टकलशत्रयजलं तथैव मन्त्रेण गृहीत्वा तूष्णीं प्रत्येकमभिषिंचति ततो मेखलामोचनं शिरोमार्गेण ॐ उदुत्तमं वरुण

पापाशमलमदवाधमं विमध्यम ७ अथाप अथावयमादित्यव्रतेतवानागसो अदितयेस्याम इतिमंत्रेण दंडकृष्णाजिनेतूर्ष्णीं
भूमौनिधाय अन्यद्वस्त्रंपरिधायोत्तरीयंचकृत्वाचम्यबद्धांजलिरादित्यमुपतिष्ठेत् ब्रह्मचारी ओंउद्यन्भ्राजिभृष्णुरिंद्रोमरुद्भिरा-
५। स्थात्प्रातर्यावभिरस्थात् दशसनिरसि दशसनिंमाकुर्वाविदन्मागमय उद्यन्भ्राजिभृष्णुरिंद्रोमरुद्भिरस्थात् दिवायावभिरस्था-
च्छतसनिरसिशतसनिंमाकुर्वाविदन्मागमय उद्यन्भ्राजिभृष्णुरिंद्रोमरुद्भिरस्थात्सायंयावभिरस्थात् सहस्रसनिरसिसह-
स्रसनिंमाकुर्वाविद न्मागमय इतिमंत्रेण ततोदधितिलान् वाप्राश्याचम्यनखरोमाणींश्छेदयित्वास्नात्वाचम्य प्रादेशमित
उदुंबरकाष्ठेनदंतधावनम् ओंअन्नाद्यायव्यूहध्वं सोमोराजायमागमत् समेमुखंप्रमार्क्ष्यतेयशसाचभगेनच इतिमंत्रेण त
तोदंतकाष्ठंपरित्यज्याचम्यसुगंधिद्रव्येणोद्वर्तनानंतरंस्नात्वाद्विराचम्य चंदनकुंकुमादिनानासिकायामुखस्यालंभने ओंप्रा
णापानौमेतर्प्पय ओंचक्षुर्मेतर्प्पय ओंश्रोत्रंमेतर्प्पय इतिमंत्रेणानुलिंपति ततः पाणीप्रक्षाल्यदक्षिणाभिमुखः पातितवाम-
जानुः कृतापसव्योद्विगुणभुग्नकुशत्रयतिलजलान्यादाय व्यस्तकुशत्रयोपरिपितॄंस्तर्प्पयेत् ओंपितरः शुंधध्वमितिमंत्रे

द०क०
त्र०
२६

ण ततः स्नानं कृत्वा आचम्यानुलिप्य जपेत् ॐ सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम् इति ततो ऽ
हतवस्त्रपरिधानं ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये इ
ति मंत्रेण ततो यज्ञोपवीतपरिधानं ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोप
वीतं बलमस्तु तेजः इति मंत्रेण द्वितीयायग्रदानं यज्ञोपवीतमिति प्रजापतिऋषिर्यजुरुपवीत देवता यज्ञोपवीत परिधाने विनि
योगः यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि आचमनं अथोत्तरीयं ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो
भगश्च माविदद्यशो मा प्रतिपद्यताम् इति मंत्रेण ततः पुष्पमालाग्रहणमंत्रः ॐ या आहरज्जमदग्निः श्रद्धायै मेधायै कामायें
द्रियाय ता अहं प्रतिगृह्णामि यशसा च भगेन च इति मंत्रेण पुष्पमालाग्रहणं ततः पुष्पमालापरिधानं ॐ यद्यशोऽप्सरसामिं
द्रश्चकार विपुलं पृथु तेन संग्रथिताः सुमनस आबध्नामि यशो मयि इति मंत्रेण पुष्पमालापरिधानं अथ वस्त्रप्रतिष्ठा अथो
ष्णीषेण शिरोवेष्टनं ॐ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः तं धीरासः कवय उन्नयंति स्वाध्यो मनसा दे

एम०
२६

॥श्रीगणेशाय नमः॥ अथ विवाहः तत्र कन्याहस्तेन षोडशहस्तमितं मंडपं तद्दक्षिणादिशि पश्चिमां दिशमाश्रित्य मंडपसंलग्नमुत्त
राभिमुखं कौतुकागारं मंडपाद्बहिरैशान्यां दिशि जामातृचतुर्हस्तपरिमितसिकतादिपरिष्कृतनतुषकेशशर्करादिरहितामुरम्यां वेणु
निर्मितां वेदीं चकारयेत् विवाहदिने कृतनित्यक्रियेण जामातृपित्रा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कर्तव्यम् कन्यापितात्वा
(पश्चिममुखः) (पूर्वमुखं)
नः शुचिः शुक्लांबरधरः कृतनित्यक्रियो मातृपूजाभ्युदयिके कृत्वा अर्हणवेलायां मंडपे प्रत्यङ्मुखः प्राङ्मुखं वरमूर्ध्वजानुं तिष्ठंतं
संबोध्य ततः स्वस्तिवाचनं कलशगणेशादीनां पूजनं च कृत्वा ॐसाधु भवानास्तामिति प्रजापतिर्ऋषिर्ब्रह्मा देवता यजुर्वेदाचेने विनियो
गः ॐसाधु भवानास्तामर्चयिष्यामो भवंतमिति ब्रूयात् ॐ अर्चयेति वरेणोक्ते वरोपवेशनार्थं शुद्धमासनं दत्वा विष्टरमादाय ॐ वि
ष्टरो विष्टरो विष्टर इत्यन्येनोक्ते ॐ विष्टरः प्रतिगृह्यतामिति दाता वदेत् ॐ विष्टरं प्रतिगृह्णामि इत्यभिधाय वरो विष्टरं गृहीत्वा ॐ वर्ष्मोस्मी
त्यस्य वर्ष्म ऋषिर्विष्टरो देवता अनुष्टुप्छंदः उपवेशने विनियोगः ॐ वर्ष्मोस्मि समानानामुद्यतामिव सूर्यः इमं तमभि तिष्ठामि यो मां कश्चाभि
दासति इत्यनेनासने उत्तराग्रविष्टरोपरि वर उपविशति तत्र उपविश्य यजमानः पाद्यमंजलिनादाय ॐ पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते ॐ

द·क· पाद्यं प्रतिगृह्यतामिति दाता वदेत् ओं पाद्यं प्रतिगृह्णामीत्यभिधाय यजमानांजलितोंजलिना पाद्यमादाय वरः विराजो दोहोसीति प्रजाप
वि· तिरृषिः विराट् देवता यजुः पादप्रक्षालने जलग्रहणे विनियोगः ओं विराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः इति दक्षि
२७ णपादं प्रक्षालयति अनेनैव क्रमेणानेनैव मंत्रेण वामचरणप्रक्षालनं ततः पूर्ववद्विष्टरांतरं गृहीत्वा चरणयोरधस्तात् उत्तराग्रं वरः कुर्या
त् ततो दूर्वाक्षतफलपुष्पचंदनयुतार्घपात्रं गृहीत्वा यजमानः ओं अर्घो अर्घो अर्घः इत्यन्येनोक्ते ओं अर्घः प्रतिगृह्यतामिति दाता वदेत्
ओं अर्घं प्रतिगृह्णामीत्यभिधाय यजमानहस्तादर्घं गृहीत्वा ओं आपस्थ युष्माभिः सर्वान्कामानवाप्नुवानीति शिरस्यक्षतादिकं किंचिद्द
त्वा ओं समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टास्माकं वीरा मा परासेचि मत्पयः इत्यर्घपात्रस्थं जलमैशान्यां दिशि त्यजति
तत आचमनीयमादाय ओं आचमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते ततो वरः ओं आचमनीयं प्रतिगृह्णामीत्यभिधाय यजमा
नहस्तादाचमनीयमादाय ओं आमागन्यशसा संसृज वर्चसा तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनां इत्यनेन सकृ एम·
दाचामेत् इति द्विस्तूष्णीं ततो यजमानः कांस्यपात्रस्थं दधिमधुघृतानि कांस्यपात्रपिहितान्यादाय ओं मधुपर्को मधुपर्को मधुपर्कः इ २७

एकमन्त्रसहित द्विमन्त्ररहित

= इतिवक्यकत्वा
त्यनेनोक्ते ॐमधुपर्कः प्रतिगृह्यतामितिदाता वदेत् ॐमधुपर्कं प्रतिगृह्णामि इति वरो वदेत् ॐमित्रस्यत्वा चक्षुषा प्रतीक्षे
इति यजमानकरस्थमेव निरीक्ष्य ॐदेवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यनेन मधुपर्कं गृ
= वरकाम करे धार्येत
हीत्वा वामहस्ते कृत्वा ॐनमः श्यावास्यायान्नशनेयत आविद्धं ततो निष्कृन्तामीत्यनामिकया त्रिप्रदक्षिणमालोड्य अना
मिकांगुष्ठाभ्यां भूमौ किंचित् निःक्षिपेत् पुनस्तथैव द्विः प्रत्येकं क्षिपेत् ततो वरः ॐयन्मधुन इति कुत्सऋषिर्मधुपर्को देवता जग
ती छन्दो मधुपर्कप्राशने विनियोगः ॐयन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो
एकांगे
मधव्योऽन्नादोऽसानीति इत्यनेन वारत्रयं मधुपर्कप्राशनं प्रतिप्राशने चैतन्मंत्रपाठः ततो मधुपर्कशेषमसंचरदेशे धारयेत् ततः द्वि
हस्तप्रक्षालनं
राचम्य ॐवाङ्म आस्येऽस्तु ॐनसोर्मे प्राणोऽस्तु ॐअक्ष्णोर्मे चक्षुरस्तु ॐकर्णयोर्मे श्रोत्रमस्तु ॐबाह्वोर्मे बलमस्तु ॐऊर्वोर्मे ओजोऽस्तु
ॐअरिष्टानि मेंगानि तनूस्तन्वा मे सह सन्तु इत्यास्यादिप्रत्येकं सर्वगात्राणि स्पृष्ट्वा ॐगौर्गौर्गौरित्यन्येनाभिहिते यजमाने च प्रत्युक्ते त
तो वरः ॐमाता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः प्रणुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट मम चामु
मुख प्रभृति सर्वांगानि हस्ताभ्यामालभेत् २

द. क. ध्यश्शर्म्मणो यजमानस्य उभयोः पाप्मा हतः ॐ उत्सृजन्तु तृणान्यन्वितितृणं छिंद्यात् ततो वेदिकायां तुषकेशशर्करादिरहितायां ह-
वि. स्तमात्रपरिमितायां चतुरस्रां भूमिं कुशैः परिसमूह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फेन स्रुवेण वा प्रागग्रं प्रादे-
२८ शमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यामुपांशुमुद्धृत्य जलेनाभ्युक्ष्य तत्र तूष्णीं कांस्यपात्रस्थं वह्नि-
मग्निकोणादानीय प्रत्यङ्मुखमुपसमाधाय तद्रक्षार्थं किंचिन्नियुज्य कौतुकागारात् वरः कन्यामानीय मंडपे उपविश्य ॐ जरां गच्छ
परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः
इति पठित्वा परिधानवस्त्रं तस्यै ददाति वरः तत ॐ या अकृन्तन्नवयं या अतन्वत याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवीर्जरसे
संव्ययस्वायुष्मतीदं परिधत्स्व वासः इति पठित्वोत्तरीयं ददाति ततो वरः ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जी-
वामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये इति पठित्वा अधोवस्त्रं वरः परिधत्ते ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती राम.
यशो भगश्च माविदद्यशो मा प्रतिपद्यताम् इति पठित्वोत्तरीयं परिदधाति वरः ततो वरस्य कन्यायाश्च द्विराचमनं ततः कन्याप्रदेन २८

ॐमधुपर्कोमधुपर्कोमधुपर्कः इत्यनेनोक्ते ॐमधुपर्कः प्रतिगृह्यतामिति दाता वदेत् ॐमधुपर्कं प्रतिगृह्णामि इति वरो व-
देत् ॐमित्रस्यत्वा चक्षुषा प्रतीक्षे इति यजमानकरस्थमेव निरीक्ष्य ॐदेवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
प्रतिगृह्णामीत्यनेन मधुपर्कं गृहीत्वा वामहस्ते कृत्वा ॐनमः श्यावास्यायान्नशनेयत्त आविद्धं तत्ते निष्कृन्तामीत्यनामिकया
त्रिप्रदक्षिणमालोड्य अनामिकाङ्गुष्ठाभ्यां भूमौ किंचिन्निःक्षिपेत् पुनस्तथैव द्विः प्रत्येकं क्षिपेत् ततो वरः ॐयन्मधुन इति कु-
त्सऋषिर्मधुपर्को देवता जगती छन्दो मधुपर्कप्राशने विनियोगः ॐयन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यं तेनाहं मधुनो मध-
व्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति इत्यनेन वारत्रयं मधुपर्कप्राशनं प्रतिप्राशने चैतन्मन्त्रपाठः ततो मधुप-
र्कशेषमसंचरदेशे धारयेत् ततः द्विराचम्य ॐवाङ्म आस्येऽस्तु ॐनसोर्मे प्राणोऽस्तु ॐअक्ष्णोर्मे चक्षुरस्तु ॐकर्णयोर्मे श्रोत्रमस्तु
ॐबाह्वोर्मे बलमस्तु ॐऊर्वोर्मे ओजोऽस्तु ॐअरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु इत्यास्यादि प्रत्येकं सर्वगात्राणि स्पृष्ट्वा ॐगौ-
र्गौरित्यन्येनाभिहिते यजमाने च प्रत्युक्ते ततो वरः ॐमाता रुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः प्रणवो चं चि-

का॰ वि॰ २८

केतुघेजनायमागामनागामारिष्टिनिवधिष्टममचामुष्यशर्म्मणोयजमानस्यउभयोः पाप्माहतः ओंउत्सृजततृणान्यच्छिनित्तृणं छिंद्या
ततोवेदिकायांतुषकेशशर्करादिरहितायांहस्तमात्रपरिमितायांचतुरस्त्रांभूमिंकुशैः परिसमूह्यतान्कुशानैशान्यांपरित्यज्य
गोमयोदकेनोपलिप्यस्फ्येनस्रुवेणवाप्रागग्रमादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्यउल्लेखनक्रमेणानामिकांगुष्ठाभ्यामुपां
सुमुद्धृत्यजलेनाभ्युक्ष्य तत्रतूष्णींकांस्यपात्रस्थंवह्निंश्रग्निकोणादानीयप्रत्यङ्मुखमुपसमाधाय तदुत्सार्थकिंचिन्निपुज्य
कौतुकागाराद्वरः कन्यामानीयमंडपेउपविश्य ओंजरांगच्छपरिधत्स्ववासोभवाकृष्टीनामभिशस्तिपावाशतंचजीवामशरदः
सुवर्चारयिंचपुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्ववासः इतिपठित्वापरिधानवस्त्रंतस्यैददातिवरः ततओंयाअकृन्तन्नवयंया
श्चतन्वतयाश्चदेवीस्तंतूनभितोततंथतास्त्वादेवीर्जरसेसंव्ययस्वायुष्मतीदंपरिधत्स्ववासः इतिपठित्वोत्तरीयंददातिततोवरः
ओंपरिधास्यैयशोधास्येदीर्घायुत्वायजरदष्टिरस्मिशतंचजीवामिशरदः पुरूचीरायस्पोषमभिसंव्ययिष्ये इतिपठित्वाअधोवस्त्रंव
रः परिधत्ते ओंयशसामाद्यावापृथिवीयशसेंद्राबृहस्पती यशोभगश्चमाविदधद्यशोमाप्रतिपद्यताम् इतिपठित्वोत्तरीयंपरिदधा

ग्र॰म॰ २८

तिवरः ततोवरस्यकन्यायाश्चहिरण्यमनंततः कन्याप्रदेनपरस्परंसमंजेथाइतिप्रेषणंकन्यावरयोः परस्परमभिमुखीकरणं ओंसमं
जंतुविश्वेदेवाः समापोहृदयानिनौसंमातरिश्वासंधातासमुदेष्ट्रीदधातुनौइतिवरः पठतिततः कन्याप्रदकर्तृकं ग्रंथिबंधनमुबंध
नंकन्यावरयो अथहस्तलेपनं शाखोच्चारणं पुनःकन्यादानं अथकन्यादाने दाताशंखस्थदूर्वाक्षतफलपुष्पचंदनजला
न्यादाय जामातृ दक्षिणकरोपरिकन्यादक्षिणकरंनिधाय ओंदाताहंवरुणोराजाद्रव्यमादित्यदैवतं वरोसौविष्णुरूपे
णप्रतिगृह्णात्वयंविधिः इतिपठित्वा गोत्रोच्चारणंकुर्यात् ओंअद्यामुकमासीयामुकपक्षीयामुकतिथौ अमुकवासरे
अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः पौत्राय अमुकगोत्रस्या
मुकप्रवरस्यामुकशर्मणः पुत्रायअमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्म
णः पौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीम्इत्यनेनक्रमेणत्रिरावर्त्यपठनीयं अमुकगोत्राय अमुकप्र
वराय अमुकशर्म्मणेवराय अमुकगोत्रां अमुकप्रवरां अमुकनाम्नींइमांकन्यांसालंकारांप्रजापतिदैवतांस्वर्गकामः पत्नी

वेनतुभ्यमहंसंप्रददे ॐस्वस्तीतिप्रतिवचन ॐद्यौस्त्वाददातुपृथिवीत्वांप्रतिगृह्णातु इतिवरः पठेत् ततः कन्याप्रदः ॐअ
द्यकृतैतत्कन्यादानप्रतिष्ठार्थं अमुंसुवर्णमग्निदैवतंअमुकगोत्राय अमुकप्रवराय अमुकशर्मणेवरायदक्षिणांतुभ्यम
हंसंप्रददे इतिदक्षिणांदद्यात् स्वस्तीतिप्रतिवचनं गोमिथुनंवादद्यात् ॐकोदात्कस्मादात्कामोदात्कामायादात्कामोदा
ता कामःप्रतिगृहीताकामैतत्तेइतिवरः पठेत् ततस्तांपाणौगृहीत्वा ॐयदेषिमनसादूरंदिशोनुपमानोवाहिरण्यपर्णोवै
कर्णः सत्वामन्मनसांकरोतु श्रीअमुकदेवीइतिपठन्निष्क्रामति ततोवेदिदक्षिणस्यांदिशिवारिपूर्णंदृढकलशंऋद्धिति
ष्ठतोमौनिनःपुरुषस्यस्कंधेअभिषेकपर्यंतंधारयेत् ततः परस्परंसमीक्षेथां इतिकन्याप्रदप्रेषानंतरं ॐ अघोरचक्षुरपति
घ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाःवीरसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे सोमःप्रथमोविविदेगंधर्वोविविदउत्त
रस्तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजः सोमोददद्गंधर्वायगंधर्वोददग्नयेरयिंचपुत्रांश्चादादग्निर्मह्यमथोइमांसानःपूषाशिवत
मामैरयत्सानऊरूउशतीविहरयस्यामुशंतःप्रहराममशेफंयस्यामुकामाबहवोनिविष्ट्यै ४ इतिवरपठितमंत्रांतेपरस्परंनिरीक्षणं

ततोग्निप्रदक्षिणीकृत्य पश्चादग्नेरहतवस्त्रवेष्टिततृणपूलके कटे वा तदुपरि दक्षिणचरणं दत्वा वधूं दक्षिणतः कृत्वा तामुपवेश्य
स्वयमुपविश्य वरः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्य कर्तव्य विवाहहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुक
गोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन होतृत्वेन च त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोस्मी
ति प्रतिवचनं यथाविहितं कर्म कुरु इति वरेणोक्ते ॐ करवाणीति ब्राह्मणो वदेत् ततोग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रा
गग्रान् कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीयात्र त्वं मे ब्रह्मा भवेत्यभिधाय कल्पितासने उपवेशयेत् ॐ अद्य कर्तव्य
विवाहकर्मणि कृताकृतावेक्षणरूप आचार्यकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिः आ
चार्यत्वेन त्वामहं वृणे ॐ वृतोस्मीति प्रतिवचनं ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा पूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोकयन् अग्ने
रुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैरृत्याद्वायव्यांतं ३०
अग्नितः प्रणीतापर्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भं कुशपत्रद्वयं प्रोक्ष

णीपात्रं आज्यस्थाली संमार्जनार्थं कुशत्रयं उपयमनार्थं वेणीरूपकुशत्रयं समिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्तरमुष्टिश
तद्वया वस्थितं तंडुलपूर्णपात्रं पवित्रछेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयं अथ तस्यामेव दिशि असाधारणवस्तून्युप
कल्पनीयानि तत्र शमीपालाशमिश्रांलाजा दृषदुपलं कुमार्या भ्राता सूर्य्यं दृष्टपुरुषः अन्यदपि तदुपयुक्तमालेपनादिद्रव्यं
ततः पवित्रछेदनकुशैः पवित्रे छित्वा ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां उत्त
राग्रे पवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्गिंगनं प्रणी
तोदकेन प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोग्निप्रणीतयोर्मध्ये प्रोक्षिणीपात्रनिधानं आज्यस्थाल्यामाज्यनिर्वापः
ततोधिश्रयणं ततो ज्वलत्तृणादिनाहविर्वेष्टयित्वा प्रदक्षिणाक्रमेण वन्हौ तन्निक्षेपः पर्यग्निकरणं ततः स्रुवप्रतपनं कृ
त्वा संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेन अभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात्
ततः आज्यस्याग्नेरवतारणं तत आज्ये प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये निरसनं पुनः प्रोक्षण्युत्पवनं ततः उपयमनकुशाना



62

दाय उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः तिस्रः समिधः क्षिपेत् ततउपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिण
क्रमेणाग्निपर्युक्षणं कृत्वा प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहु
तीर्जुहोति तत्राघारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ओं प्रजापतये
स्वाहा इदं प्रजापतये इति मनसा ओं इंद्राय स्वाहा इदमिंद्राय इत्याघारौ ओं अग्नये स्वाहा इदमग्नये ओं सोमाय स्वाहा इदं सोमा
य इत्याज्यभागौ ओं भूः स्वाहा इदं भूः ओं भुवः स्वाहा इदं भुवः ओं स्वः स्वाहा इदं स्वः एता महाव्याहृतयः त्वन्नो अग्न इति वामदेव
ऋषिरग्निवरुणौ देवते त्रिष्टुप्छंदो होमे विनियोगः ओं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो व
ह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा इदमग्नीवरुणाभ्यां ओं स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उ
षसो व्युष्टौ अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां अयाश्चाग्न इति वामदेव
ऋषिरग्निर्देवता त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमे विनियोगः ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमया असि अया

 नोवरुंवहास्यपानो धेहिमेषजथंस्वाहा इदमग्नये ॐयेतेशतंवरुणंयेसहस्रंयज्ञियापाशाविततामहांतस्तेभिर्नो अ
 द्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यःॐ
 उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमथंश्रथायअथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इ
दंवरुणाय एताःप्रायश्चित्तसंज्ञकाःततोऽन्वारब्धंविना ॐप्रजापतयेस्वाहा इदंप्रजापतये ॐअग्नयेस्विष्टकृतेस्वा
हा इदमग्नयेस्विष्टकृते उदकोपस्पर्शनं अथराष्ट्रभृतः ॐऋताषाडृतधामाग्निर्गंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मै
65
स्वाहावाट् इदमृताषाहेऋतधाम्नेऽग्नयेगंधर्वाय ॐऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसोमुदोनामताभ्यः
स्वाहा इदमोषधीभ्योप्सरोभ्योमुद्भ्यः ॐसंहितोविश्वसामासूर्योगंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ३ इदंसंहि
तायविश्वसाम्नेसूर्यायगंधर्वाय ॐसंहितोविश्वसामासूर्योगंधर्वस्तस्यमरीचयोप्सरसआयवोनामताभ्यःस्वाहा ४ वाट् 
इदंमरीचिभ्योप्सरोभ्यःआयुभ्यः ४ सुषुम्णःसूर्यरश्मिश्चंद्रमागंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदंसुषुम्णायसू 

येरप्सरसेचंद्रमसेगंधर्वाय ५ ॐसुषम्णः सूर्यरश्मिश्चंद्रमागंधर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरुभ्यः स्वाहा वाट् ६ इदंनक्ष
त्रेभ्योप्सरोभ्योभेकुरुभ्यः ॐइषिरोविश्वव्यचवातोगंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदमिषिरायविश्वव्यच
सेवातायगंधर्वाय ॐइषिरोविश्वव्यचावातोगंधर्वस्तस्यापोऽप्सरसऊर्जोनामताभ्यः स्वाहा इदंमरुभ्योऽप्सरोभ्यऊर्गभ्यः
ॐभुज्युः सुपर्णोयज्ञोगंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदंभुज्यवेसुपर्णाययज्ञायगंधर्वाय ९ ॐभुज्युःसु
पर्णोयज्ञोगंधर्वस्तस्यदक्षिणाप्सरसस्तावानामताभ्यः स्वाहावाट् इदंदक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यः स्वाहा १० ॐप्रजाप
तिर्विश्वकर्मामनोगंधर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदंप्रजापतयेविश्वकर्मणेमनसेगंधर्वाय ११ ॐप्रजापति
र्विश्वकर्मामनोगंधर्वस्तस्यऋक्सामान्यप्सरसोएष्टयोनामताभ्यः स्वाहा इदमृक्सामेभ्योऽप्सरोभ्यएष्टिभ्यः १२ इतिराष्ट्र
भृतः अथजयाहोमः ॐचित्तंचस्वाहा इदंचित्ताय ॐचित्तिश्चस्वाहा इदंचित्त्यै ॐआकूतंचस्वाहा इदमाकूताय ॐआकू
तिश्चस्वाहा इदमाकूत्यै ॐविज्ञातंचस्वाहा इदंविज्ञाताय ॐविज्ञातिश्चस्वाहा इदंविज्ञात्यै ॐमनश्चस्वाहा इदंमनसे

ओं शक्करीश्च स्वाहा इदं शक्करीभ्यः ओं दर्शश्च स्वाहा इदं दर्शाय ओं पौर्णमासं च स्वाहा इदं पौर्णमासाय ओं [illegible] च स्वाहा इ
दं बृहते ओं रथंतरं च स्वाहा इदं रथंतराय ओं प्रजापतिर्जयानिंद्राय विस्मे प्रायच्छदुग्रः प्रतनाजये षु तस्मै विशः समनंत स
वीसश्चग्रः स इह व्योवभूव स्वाहा इदं प्रजापतये जयानिंद्राय इति जयाहोमः उदकोपस्पर्शनं ओं अग्निर्भूतानामधिपतिः समा
वत्वस्मिन्ब्रह्मन्यस्मिन्क्षत्रेश्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्यां स्वाहा इदमग्नये भूतानामधिपतये
ओं इंद्रो ज्येष्ठानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रे श्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा
इदमिंद्राय ज्येष्ठानामधिपतये ओं यमः पृथिव्या अधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रे श्यामाशिष्यस्यां पुरोधायामस्मिन्क
र्मण्यस्यां देवहूत्यां स्वाहा इदं यमाय पृथिव्या अधिपतये अत्र प्रणीतोदकस्पर्शः ओं वायुरंतरिक्षस्याधिपतिः समावत्वस्मि
न्ब्रह्मण्यस्मिन्क्षत्रे श्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्यां स्वाहा इदं वायवे अंतरिक्षस्याधिपतये ओं सूर्यो
दिवो धिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिंक्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा इदं सूर्याय दिवो

धिपतये ॐ चंद्रमा नक्षत्राणामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहू
त्याᳪ स्वाहा इदं चंद्रमसे नक्षत्राणामधिपतये ॐ बृहस्पतिर्ब्रह्मणोधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यांपु
रोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳪ स्वाहा इदं बृहस्पतये ब्रह्मणोधिपतये ॐ मित्रः सत्यानामधिपतिः समावत्वस्मिन् ब्रह्म
ण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳪ स्वाहा इदं मित्राय सत्यानामधिपतये ॐ वरुणोया
मधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳪ स्वाहा इदं वरु
णायापामधिपतये ॐ समुद्रः स्रोत्यानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मि
न् कर्म्मण्यस्यां देवहूत्याᳪ स्वाहा इदं समुद्राय स्रोत्यानामधिपतये ॐ अन्नᳪ साम्राज्यानामधिपतिः समावत्वस्मिन्
ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳪ स्वाहा इदमन्नाय साम्राज्यानामधिपत
ये ॐ सोम ओषधीनामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या

ॐ स्वाहा इदं सोमायौषधीनामधिपतये ॐ सविता प्रसवानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशि
ष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा इदं सवित्रे प्रसवानामधिपतये ॐ रुद्रः पशूनामधिपतिः समा
वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा इदं रुद्राय पशूनामधिप
तये अत्र प्रणीतोदकस्पर्शः ॐ त्वष्टा रूपाणामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायाम
स्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा इदं त्वष्ट्रे रूपाणामधिपतये ॐ विष्णुः पर्वतानामधिपतिः समावत्वस्मिन् ब्रह्मण्य
स्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा इदं विष्णवे पर्वतानामधिपतये ॐ मरुतो
गणानामधिपतयस्ते मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा
इदं मरुद्भ्यो गणानामधिपतिभ्यः ॐ पितरः पितामहाः परेऽवरे ततस्ततामहास्ते मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशि
ष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां ॐ स्वाहा इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः अत्र प्र

दग्नेः स्थितां लाजाहोमः सांगुष्ठहस्तग्रहणाश्मारोहणगाथागानाग्निप्रदक्षिणाः पुनरपि तथैव एतेन नवलाजाहुतयः सांगुष्ठहस्त
ग्रहणत्रयं गाथागानत्रयं प्रदक्षिणात्रयं संपद्यते ततोऽवशिष्टलाजैः कन्याभ्रातृदत्तैरंजलिस्थैः सूर्पकोणेन वधूर्जुहोति ॐ भगाय
स्वाहा इदं भगाय चतुर्थं भ्रमणं तूष्णीं अग्रे वरः पश्चात् वधूः ततस्तूष्णीं परिक्रमणम् ततो वरः उपविश्य ब्राह्मणान्वारब्धः
आज्येन प्राजापत्यं जुहूयात् ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा अत्र प्रोक्षणीपात्रे हुतशेषाज्यप्रक्षेपः ततः आलेपने
नोत्तरोत्तरकृतसप्तमंडलेषु सप्तपदाक्रमणं वरः कारयति वक्ष्यमाणमंत्रैः तत्र प्रथमे एकमिषे विष्णुस्त्वा नयतु द्वितीये द्वे ऊर्जे
विष्णुस्त्वा नयतु तृतीये त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु चतुर्थे चत्वारि मयोभवाय विष्णुस्त्वा नयतु पंचमे पंच पशुभ्यो विष्णु
स्त्वा नयतु षष्ठे षड् ऋतुभ्यो विष्णुस्त्वा नयतु सप्तमे सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ततोऽग्नेः पश्चादुपविश्य
पुरुषस्य स्कंधे स्थितकुंभादाम्रपल्लवेन जलमानीय तेन च वरो वधूं एनां मूर्द्धन्यभिषिंचति ॐ आपः शिवाः शिवतमाः शां
ताः शांततमास्तास्ते कृण्वंतु भेषजमिति पुनस्तथैवानीत जलेनात्मानमभिषिंचति आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन

वि. क. नः महेरणाय चक्षसे योवः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ आ
वि. पोजनयथा च नः इति तिसृभिः अथैनां सूर्यमुदीक्षस्वेति ॐ तच्चक्षुरित्यनेन मंत्रेण वधूः सूर्यं पश्यति अस्तमिते सूर्ये ध्रु
३५ वमुदीक्षस्वेति पतिः प्रेषानंतरं ध्रुवं पश्यति तत्र पठनीयो मंत्रः ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वादाद् बृह
स्पतिर्मया पत्या प्रजावती सं जीव शरदः शतमिति यद्यशक्ता यदि न पश्यति तथापि पश्यामीति ब्रूयात् ततो वरो वध्वा दक्षिणां
सोपरि हस्तं नीत्वा तस्या हृदयमालभेत् मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु मम वाचमेकमना जुषस्व प्रजापति
ष्ट्वा नियुनक्तु मह्यमिति मंत्रेण अथैनामभिमंत्रयति वरः ॐ सुमंगलीरियं वधूरिमाꣳ समेत पश्यत सौभाग्यमस्यै दत्त्वा यथास्तं
विपरेतन इति मंत्रेण अथ वधूं बलवान् कश्चिद् ब्राह्मण उत्थाप्य प्रागुदग्वानुगुप्तागारे लोहितानडुह चर्मणि प्रतिलोमास्ती
र्णे उपवेशयेत् वरो वा ॐ इह गावो निषीदंत्विहाश्वा इह पुरुषा निषीदंत्विह सहस्रदक्षिणो यज्ञ इह पूषा निषीदंत्विति मंत्रेण अ ग.म. ३५
थ स्विष्टकृद्धोमः अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते स्रुवावशिष्टाज्यस्य प्रोक्षणीपात्रे प्रक्षेपः अयं च होमो ब्राह्मणान्वार

ध्वकर्त्तकः ततआचम्यसंस्रवप्राशनं अथाचम्य ऊँअद्यकृतैतत् विवाहहोमकर्म्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवत
ममुकगोत्रायामुकशर्म्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिब्रह्मणोदक्षिणांदद्यात् स्वस्तीतिप्रतिवचनं ऊँअद्यकृ
तैतद्विवाहहोमकर्म्मणिआचार्य्यकर्म्मप्रतिष्ठार्थम् इदंहिरण्यमग्निदैवतद्रव्यम् यथानामगोत्रायाऽमुकशर्म्मणेब्राह्म
णायदक्षिणांतुभ्यमहंसंप्रददे ततोब्रह्मग्रंथिविमोकः ऊँसुमित्रियानआपओषधयः संतुइतिपवित्रंगृहीत्वाप्रणीता
जलेनशिरः संमृज्य ऊँदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः इत्यैशान्यांप्रणीतान्युब्जीकुर्यात् ततआस्तरणक्र
मेणबर्हिरुत्थाप्याज्येनाभिघार्य्यहस्तेनैववर्हिर्होमः तत्रमंत्रः ऊँदेवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञ
ँ स्वाहावातेधाःस्वाहा ततउत्थायवधूदक्षिणहस्तेनस्रुवस्थघृतपुष्पफलैः पूर्णाहुतिः तत्रमंत्रः ऊँमूर्द्धानंदिवोअरतिंपृ
थिव्यावैश्वानरमृतआजातमग्निंकविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतुदेवाःस्वाहा ततःस्रुवेणभस्मानीयदक्षि
णानामिकाग्रगृहीतभस्मना ऊँत्र्यायुषंजमदग्नेरितिललाटे ऊँकश्यपस्यत्र्यायुषंइतिग्रीवायां ऊँयद्देवेषुत्र्यायुषंइतिदक्षिण

च०क०म ३६

से ॐ तन्नो अस्तु ह्यायुषमिति हृदि एवं बध्वा अपि कुर्यात् तन्नो ऽत्यस्यस्थाने तत्ते इति विशेषः ततश्चाचारात् शाणशं वशमीसु
वर्णप्रेरितसिंदूरकरणं वरकर्तृकं ततो ऽन्यैरपि प्रतिष्ठितस्त्रीपुरुषैः सिंदूरकरणं ग्राम्यवचनं वरः कुर्यात् ग्राम्याः स्त्रियः अथ वो
दितो मंडपमागत्य दूर्वाक्षतादिग्रहणं ततस्त्रिरात्रं मक्षारलवणाशिनौ अधः शायिनौ निवृत्तमैथुनौ भवतः प्राङ्मुखो वधूवरौ स्थि
तौ भवतः इति विवाहकर्मपद्धतिः समाप्ता॥ ॐ॥ अथ चतुर्थीकर्म ततश्चतुर्थ्यामपररात्रे चतुर्थीकर्म तच्च गृहाभ्यंतर एव का
र्यं ततः उद्वर्तनादि कृत्वा युगकाष्ठमुपविश्य स्नात्वा शुद्धवस्त्रं परिधाय गृहं प्रविश्य वधूवरौ प्राङ्मुखौ भवतः ॐ गणपत्यादि देव
तापूजनं ततः कुशंडिकारंभः तत्र क्रमः जामातृहस्तपरिमितां वेदीं कुशैः परिसमूह्य तान्कुशानैशान्यां परित्यज्य गोमयोदके
नोपलिप्य स्फेन स्रुवेण वा प्रागग्र प्रादेशमात्रं त्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य ज
लेनाभ्युक्ष्य तत्र तूष्णीं कांस्यपात्रेणाग्निमानीय स्वाभिमुखं निदध्यात् ततः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अस्यां रात्रौ कर्त
व्य चतुर्थीहोमकर्मणि कृताकृतावेक्षण रूपब्रह्मकर्मकर्तुं होतृकर्मकर्तुं ममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदना

७२

राम ३६

पृषा निषीदं त्विति मंत्रेण अथ स्विष्टकृद्धोमः अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते स्रुवावशिष्टाज्यस्य प्रोक्षणीपा
त्रे प्रक्षेपः अयं च होमो ब्रह्मणान्वारब्धकर्तृकः ततआचम्य संस्रवप्राशनं अथाचम्य ओं अद्य कृतैतत् विवाहहोमकर्मणः प्र
७३ तिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षि
णां दद्यात् स्वस्तीति प्रतिवचनं ओं अद्य कृतैतद्विवाहहोमकर्मणि आचार्यकर्मप्रतिष्ठार्थम् इदं हिरण्यमग्निदैवतं द्रव्य
म् यथानामगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे ततो ब्रह्मग्रंथिविमोकः ओं सुमित्रिया न आप ओष
धयः संतु इति पवित्रं गृहीत्वा प्रणीताजलेन शिरः संमृज्य ओं दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्र
णीतान्युब्जीकुर्यात ततआस्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य हस्तेनैव बर्हिर्होमः तत्र मंत्रः ओं देवा गातुविदो गातुं
वित्त्वा गातुमित मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः स्वाहा ततउत्थाय सव्यपूर्वदक्षिणहस्तेन स्रुवस्थघृतपुष्पफलैः पूर्णा
हुतिः तत्र मंत्रः ओं मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयंतु

द०क दिवाः स्वाहा ततः स्रुवेणभस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ओं त्र्यायुषं जमदग्नेरिति ललाटे ओं कश्यपस्य त्र्या
वि० युषमिति ग्रीवायां ओं यद्देवेषु त्र्यायुषमिति दक्षिणांसे ओं तन्नो अस्तु त्र्यायुषमिति हृदि एवं वध्वा अपि कुर्यात् तत्रोऽत्यस्य स्था
३७ नेतन्ने इति विशेषः ततआचारात् शणशंखशमीसुवर्णप्रेरितसिंदूरकरणं वरकर्तृकं ततोऽन्यैरपि प्रतिष्ठितस्त्रीपुरु
षैः सिंदूरकरणं ग्राम्यवचनं च कुर्यात् ग्राम्याः स्त्रियः अथ वेदितो मंडपमागत्य दूर्वाक्षतादिग्रहणं ततस्त्रिरात्रमक्षा
रलवणाशिनौ अधःशायिनौ निवृत्तमैथुनौ भवतः प्राङ्मुखौ वधूवरौ स्थितौ भवतः इति विवाहकर्मपद्धतिः समाप्तः ॥

अथ चतुर्थीकर्म ततश्चतुर्थ्यामपररात्रे चतुर्थीकर्म तच्च गृहाभ्यंतर एव कार्य्यं ततः उद्वर्त्तनादि कृत्वा युगकाष्ठमुपवि
श्य स्नात्वा शुद्धवस्त्रं परिधाय गृहं प्रविश्य वधूवरौ प्राङ्मुखौ भवतः ओं गणपत्यादिदेवतापूजनं ततः कुशंडिकारंभः तत्र क्र
मः जामातृहस्तपरिमितां वेदीं कुशैः परिसमूह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवेण वा प्राग एम
ग्रप्रादेशमात्रं त्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य तत्र तूष्णीं कांस्यपा ३७

त्रेणाग्निमानीयस्याभिमुखं निदध्यात् ततः पुष्पचन्दनताम्बूलवस्त्राण्यादाय ओं अस्यां रात्रौ कर्त्तव्यचतुर्थीहोमकर्मणि कृता
कृतावेक्षण रूपब्रह्मकर्मकर्तुं होतृकर्मकर्त्तुं ममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनादिभिर्ब्रह्मत्वेन होतृत्वेन
त्वामहं वृणे इति ब्राह्मणं वृणुयात् ओं वृतोस्मीति प्रतिवचनं यथाविहितं कर्म कुर्विति वरेणोक्ते ओं करवाणीति ब्राह्मणो
वदेत् ततोग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्रह्माणमग्निं प्रदक्षिणक्रमेणानीय ओं अत्र त्वं
मे ब्रह्मा भवेत्यभिधाय ओं भवानीति ब्राह्मणेनोक्ते कल्पितासने उदङ्मुखं ब्रह्माणमुपवेशयेत् ततः प्र दकपात्रमग्नेरु
त्तरतः प्रतिष्ठाप्य प्रणीतापात्रे पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः शोप
रि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानान्तं ब्रह्मणोग्निपर्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः
प्रणीतापर्यन्तं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयं प्रोक्ष
णीपात्रं आज्यस्थाली संमार्जनार्थं कुशत्रय उपयमनार्थं वेणीरूपकुशत्रयं समिधस्तिस्रः स्रुव आज्यं षट्पंचाशदुत्त

द·क· चं· ३८

रवरमष्टिशतद्व्यावच्छिन्नामतंडुलपूर्णपात्रं एतानि पवित्रच्छेदनकुशानां पूर्वपूर्व[illegible]क्रमेणासादनीयानि ततः पवित्र
च्छेदनकुशैः पवित्रे छित्वा प्रादेशमितपवित्रकरणं ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अना
मिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे धृत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं पवित्रे गृहीत्वा त्रिरुद्दिंगनं प्रणीतो
दकेन प्रोक्षणीप्रोक्षणं ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निधाय आज्यस्था
ल्यामाज्यनिर्वापः ततोऽधिश्रयणं ततो ज्वलत्तृणादिना हविर्वेष्टयित्वा प्रदक्षिणक्रमेण पर्यग्निकरणं ततः स्रुवं प्रतप्य सं
मार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात् ततः आज्य
स्याग्रेरवतारणं तत आज्ये प्रोक्षणी दुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः पूर्ववत्प्रोक्षण्युत्पवनं उपयमनकुशान्
वामहस्तेनादाय उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् तत उपविश्य प्रोक्षणीजलेनाग्नि
प्रदक्षिणं पर्युक्ष्य पवित्रं प्रणीतापात्रे धृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहुयात् तत्राघारादारभ्याहुतिचतुष्टये तत्तद्



७८

मुद्रां कुर्यात् ततस्तरणक्रमेण वर्हिर्हृत्याग्न्याघृताक्तं हस्तेनैव जुहुयात् ॐ देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं दे
व यज्ञं स्वाहा वाते धाः स्वाहा आम्रपल्लवेन जलमानीय मूर्ध्नि वरो वधूमभिषिंचति ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी ।
निंदिता तनूर्जारघ्नी ततस्तां करोमि सा जीर्य त्वं मया सह श्री अमुक देवि इति मंत्रेण ततो वधूः स्थालीपाकं प्राशयति वरः ॐ प्राणैस्ते
प्राणान् संदधामि ॐ अस्थिभिरस्थीनि संदधामि ॐ मांसैर्मांसानि संदधामि ॐ त्वचा ते त्वचं संदधामि इति मंत्रचतुष्टयेन प्रति
मंत्रांते ऽवशेषं प्राशयेत् ततो वधूहृदयं स्पृष्ट्वा वरः पठेत् ॐ यत्ते सुसीमे हृदयं दिवि चंद्रमसि श्रितं वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं
जीवेम शरदः शतं शृणुयाम शरदः शतमिति अथ कंकणमोक्षणादीनि युतग्रंथिविमोकादीनि आचारप्राप्तानि ततउत्थाय वधू
दक्षिणहस्तस्पृष्टस्रुवेण घृतफलपुष्पपूर्णेन पूर्णाहुतिं कुर्यात् ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविं सम्रा
जमतिथिं जनानामासन्ना पात्रं जनयंत देवाः स्वाहा इति मंत्रेण पूर्णाहुतिः ततः स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्म
ना ॐ त्र्यायुषं जमदग्नेः इति ललाटे ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले ततो ऽस्तु त्र्यायुषं इति

द.क. हृदये एवंविधान्यपिस्थापुष्यंकुर्यात् तत्रोऽस्यस्यस्थानेतत्त्वे इतिविशेषः ततआचार्यायदक्षिणांदद्यात्होत्रेचदक्षि-
च. णांदद्यात् भूयसींदद्यात् इतिचतुर्थीकर्मसमाप्तम् शुभंभूयात् ॥ ॥ श्रीराम ॥ १ ॥
३९

